

# को वै रसः

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

प्रणेता

आचार्यश्री-पी. रामचन्द्रुडुः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

ĀCĀRYA BADARĪNĀTHAŚUKLA-SMṚTI-
GRANTHAMĀLĀ

[ Vol. 4 ]

# *KO VAI RASAḤ*

*BY*


**PROF. P. RĀMACANDRUḌU**

**Ex- Professor, Department of Sanskrit**

**Osmania University, Hyderabad**


*FOREWORD BY*

**DR. MANDAN MISHRA**

*VICE-CHANCELLOR*




**V A R A N A S I**

**1997**

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi-221 002.



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



**First Edition—** 500 Copies
**Price**—Rs. 90.00



*Printed by—*
**Ratna Printing Works**
B 21/42A, Kamachha, Varanasi-221 010

आचार्यबदरीनाथशुक्लस्मृति-ग्रन्थमाला

[ चतुर्थं पुष्पम् ]

# को वै रसः

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

प्रणेता सम्पादकश्च

**आचार्यश्री- पी. रामचन्द्रुडुः**

आचार्यचरः, संस्कृतविभागस्य

उस्मानियाविश्वविद्यालये

हैदराबादः



**वाराणस्याम्**

**२०५३ तमे वैक्रमाब्दे    १९१८ तमे शकाब्दे    १९९७ तमे खैस्ताब्दे**

*अनुसन्धानप्रकाशनपर्यवेक्षकः –*
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



*प्रकाशकः –*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२.



*प्राप्तिस्थानम् –*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२.



**प्रथमं संस्करणम्–** ५०० प्रतिरूपाणि
**मूल्यम्–**९०.०० रूप्यकाणि



*मुद्रकः –*
**रत्ना प्रिंटिंग वर्क्स**
बी २१/४२ ए., कमच्छा, वाराणसी-२२१ ०१०

# प्रस्तावना

विश्वविद्यालयस्यास्य स्वनामधन्यानां विद्वद्धौरेयाणां कीर्तिशेषाणामाचार्याणां पूर्वकुलपतीनां च **श्रीबदरीनाथशुक्ल**महोदयानां स्मृतौ समायोजिताया व्याख्यानमालायाश्चतुर्थं पुष्पं 'को वै रसः' इति नाम्ना विश्वविद्यालयेन प्रकाश्यते । व्याख्यानमालायामस्यां मनीषिप्रवरैः प्राच्य- पाश्चात्त्यविद्याविशेषज्ञैः प्रो. पी. रामचन्द्रुडुमहोदयैः – **१. अद्वैतं भामतीप्रस्थानं च, २. श्रीमदप्पय्यदीक्षितस्य न्यायरक्षामणिः, ३. रसविमर्शः, ४. कालिदासस्य पुनः पुनरुक्तयः**–इति भाषणचतुष्टयं तत्रभवतां कुलपतिचराणां श्रद्धेयानां **प्रो. वि. वेङ्कटाचलम्**महोदयानामाध्यक्ष्ये तेषामेव निमन्त्रणमधिकृत्य प्रदत्तम्, तदिदं प्रकाशनं तेषामेव चतुर्णां भाषणानां सङ्ग्रहः ।

विषयाणामियं विविधता वस्तुत एकत्र शुक्लमहोदयानां वैदुष्यप्रसरं स्मारयति, अपरत्र च वक्तृमहोदयानां **प्रो. पी. रामचन्द्रुडु**महाशयानां प्राचीनाचार्यवद् विभिन्नशास्त्राणां बहुज्ञतां प्रदर्शयति । एकत्र अद्वैतं न्यायरक्षामणिश्चेति वेदान्तविषये विवरणम्, अपरत्र रसविमर्शः, कालिदासस्य साहित्यिकं वैभवमधिकृत्य प्रदत्तानीमानि व्याख्यानानि तेषां विभिन्नशास्त्रज्ञानविषयतायाः प्रत्यक्षाणि निदर्शनानि । सम्प्रत्येकस्यापि शास्त्रस्य विशेषज्ञानां प्रतिदिनं न्यूनता परिदृश्यते, का नाम कथा बहुशास्त्रविज्ञतायाः । इदं हि वैशिष्ट्यमस्य व्याख्यानमालायाः, तच्च सर्वथाऽभिनन्दनीयम् ।

अद्वैतं नाम नवनीतमस्य राष्ट्रस्य विदुषां चिन्तनस्य । भगवान् शङ्कराचार्योऽद्वैतमतस्य सर्वोत्तमाचार्यत्वेनैव विश्वस्मिन् जगति समादृतः । विभिन्ना भाष्यकारा व्याख्यानकाराश्च तत्प्रतिपादितानां सिद्धान्तानां व्याख्यानेन आत्मानमलङ्कुर्वन् । तेषु ब्रह्मसूत्रभाष्यव्याख्यां भामतीं व्यरचयत् श्रीवाचस्पतिमिश्रः । परिपूर्णेयं व्याख्या वेदान्तसूत्राणां व्याख्याने सर्वथा समर्था । स्वयं वाचस्पतिमिश्रः समुद्घोषयति भामत्याम्–

"यदिदं मया प्रतिपादितं न तत्र काप्यपूर्वता अपि तु श्रीशङ्करभगवत्पादस्यैव तत्सर्वमवदानम्" ।

इदं वाचस्पतिमिश्रस्य विनयातिशयं प्रकटयति । लेखेऽस्मिन् **'स्वाध्यायोऽध्येतव्यः'** इत्यादीनि विधिवाक्यान्यपि मीमांसा-वेदान्तदृशा विवेचितानि, जीवेश्वरस्वरूपं ब्रह्मात्मैक्यसाक्षात्कारमविद्याञ्चाधिकृत्य शास्त्रीया विचाराः सुस्पष्टं निरूपिताः । सेयं प्रस्तुतिर्भामतीप्रस्थानविषये विदुषां दृष्टिं समाकर्षयिष्यतीत्यत्र नास्ति सन्देहः ।

द्वितीयव्याख्याने **"श्रीमदप्पय्यदीक्षितस्य न्यायरक्षामणिः"** इति विषयमधिकृत्य अप्पय्यदीक्षितस्य शास्त्रक्षेत्रेऽवदानं संक्षेपेण वर्णितम्, तस्य च सकलशास्त्रपारदर्शित्वमुपस्थापितम् ।

सोऽयमप्पय्यदीक्षितोऽद्वैतविद्यायाः सुप्रसिद्ध आचार्य आसीत् । असौ समुद्घोषितवान् यद् भगवतश्चन्द्रमौलीश्वरस्यानुग्रहादेव पुंसामद्वैतवासनाऽऽविर्भवति । अतः सोऽयमासीद्भगवतः शिवस्यानन्योपासकः । अस्य च वैदुष्यं तस्या एवोपासनायाः प्रतिफलम् ।

अयं हि न्यायरक्षामणिर्ब्रह्मसूत्राणां प्रथमाध्यायस्य शङ्करभगवत्पादभाष्यानुसारिव्याख्यानम् । अत्र च विशिष्टाद्वैतिनां मतानि खण्डितानि । उपनिषदर्थनिर्णायकतयाऽस्यास्ति विशिष्टं महत्त्वम् । अलङ्कारशास्त्रेऽपि वेदान्तेऽनुप्रवेशं वर्णयित्वा श्रीमान् व्याख्यातामहोदयः प्रो. पी. रामचन्द्रुडुमहाशयोऽप्पय्यदीक्षितस्य व्यापकं वैदुष्यं प्रकाशितवानिति सर्वथा प्रशंसनीयम् ।

तृतीये व्याख्याने **"रसविमर्शः"** इति विषयमधिकृत्य साहित्यशास्त्रस्य विविधानामाचार्याणां मतानि सम्यक् संस्थापितानि । सोऽयं रसः परब्रह्मस्वरूपत्वेनोपवर्णितः । **'रसो वै सः'** इत्याद्युपनिषद्वाक्ये रसस्य परब्रह्मस्वरूपत्वं सम्पोषितम् । रसस्योत्पत्तिविषये सर्वेषां रसानामानन्दरूपतायाश्च शास्त्रीयं तत्त्वं निरूपितम् । रसनिष्पत्तिविषय आनन्दवर्धनस्य, अभिनवगुप्तस्य च सिद्धान्ताः प्रदर्शिताः । करुणरसस्य महत्त्वं सोदाहरणं विवेचयता लेखकेन भवभूतेरुदाहरणेऽस्यापि रसस्यानन्दमयत्वं संसाधितम् । अस्मिन् हि लेखे तत्रभवतामाचार्यश्रीरामचन्द्रुडुमहोदयानां व्यापकस्य वैदुष्यस्यानुपमं दर्शनं प्राप्तुं शक्यते ।

चतुर्थे चरमे च व्याख्याने **"कालिदासस्य पुनः पुनरुक्तयः"** इति शीर्षकेण बहून्युदाहरणानि प्रस्तूय स्वकीयं कालिदासपाण्डित्यं संस्थापितम्,

अस्यां गभीरायां व्याख्यानमालायाञ्च माधुर्यसञ्चारः कृतः । अयं हि विशिष्टं महत्त्वमस्या व्याख्यानमालायाः ।

व्याख्याता आचार्यश्रीरामचन्द्रुडुमहोदयो व्याकरणशास्त्रस्य वेदान्तस्यालङ्कारशास्त्रस्य च सर्वसम्मतो विद्वान् समादृतश्च संस्कृतजगतः । एते हि प्राच्यपाश्चात्त्योभयविधपरम्पराविशेषज्ञा उस्मानियाविश्वविद्यालयस्य संस्कृतविभागस्याचार्यपदं संस्कृताकादम्या निदेशकपदञ्चालङ्कुर्वन्, महामहिमशालिना भारतराष्ट्रपतिना १९८७ तमे खैस्ताब्दे विंशतिसहस्ररूप्यकपरिमितवार्षिकमानदेयेन सह सम्मानप्रमाणपत्रप्रदानेन सम्मानिताः, साहित्याकादम्या उत्तरप्रदेश-संस्कृतसंस्थानस्यैकलक्षरूप्यकात्मक- **विश्व-संस्कृत-भारती**-पुरस्कारेण सुसम्मानिताः, प्रायशश्चत्वारिंशतां संस्कृत-तेलुगु-ग्रन्थानां लेखका अनुवादका सम्पादकाश्च वर्तन्ते । भारतशासनेन, आन्ध्रप्रदेशशासनेन, विश्वविद्यालयानुदानायोगेन, विविधविश्वविद्यालयानां विविधसमितीनां मानितसदस्यत्वेन सम्मानितैः संस्कृतजगतो गौरवभूतैः, एकत्र लेखनम्, अपरत्र सम्पादनं तथा चाध्यापन-भाषणादिकौशलैः सर्वस्मिन्नपि राष्ट्रे एतैः संस्थापितः स्वकीयः कीर्तिस्तम्भः समस्तानामपि संस्कृतानुरागिणां विदुषाञ्च कृते मार्गदर्शकः ।

एषा हि व्याख्यानमाला तेषां वैदुष्यस्य संक्षिप्तप्रतीकभूता । अस्याः प्रकाशनप्रसङ्गेऽहम् **आचार्यश्री-पी. रामचन्द्रुडु**महोदयेभ्यः सम्मानाञ्जलिम्, विश्वविद्यालयस्यास्य प्रकाशनाधिकारिणे **डॉ. हरिश्चन्द्रमणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय रत्नामुद्रणालयसञ्चालकाय **श्रीविपुलशङ्करपण्ड्या**-महोदयाय च धन्यवादान् समर्पयन् प्रकाशनमिमं संस्कृतजगते समुपहरामि ।

**वाराणसी**
वसन्तपञ्चमी,
वि. सं. २०५३

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका





आचार्यश्री-पी. रामचन्द्रुडुप्रणीतः

# को वै रसः

स्व. आचार्यबदरीनाथशुक्लव्याख्यानमालायाः

चतुर्थं पुष्पम्

# अद्वैतं भामतीप्रस्थानं च

तत्रभवन्तः श्रीशङ्करभगवत्पादा उपनिषद्-ब्रह्मसूत्रभगवद्गीतानां भाष्य-नाम्ना प्रसिद्धा विस्तृता व्याख्या विरच्य अप्रकम्प्यं महान्तम् अद्वैतसिद्धान्त-प्रासादं निर्ममुः, यस्याग्रमधिरूढा मुमुक्षवोऽनन्यतोलभ्यं वाचामगोचरम् आनन्दं निर्विशन्ति । महतोऽस्य प्रासादस्य शारीरकमीमांसावेदान्तमीमांसा-शास्त्राद्यपरनामधेयं ब्रह्मसूत्रभाष्यं प्रधान आधारस्तम्भः । ब्रह्मसूत्रभाष्यस्य चास्य नैका व्याख्याः, उपव्याख्यानानि च निरमीयन्त तत्तत्कालेषु विद्वद्वरेण्यैः । पद्मपादाचार्यविरचिता पञ्चपादिका, वाचस्पतिमिश्रविरचिता भामती च ब्रह्मसूत्रभाष्यव्याख्यासु उन्नतं स्थानमलङ्कुरुतः । पञ्चपादिका अद्य केवलं चतुस्सूत्रीभाष्यस्यैवोपलभ्यते । पञ्चपादिकाया व्याख्या विवरणाख्या प्रकाशात्मना विरचिता प्रस्थानस्यैकस्य मूलमभवद् यस्यैव प्रथितिर्विवरणप्रस्थानमिति । 'तत्त्वदीपन'प्रभृतयो विवरणस्य नैका उपव्याख्याः प्रसिद्धा एव । द्वितीयस्य प्रस्थानस्य प्रवर्तयिता तत्रभवान् वाचस्पतिमिश्रो ब्रह्मसूत्रशाङ्करभाष्यं भामत्याख्यया व्याख्यया अलञ्चकार । त्रयोदशशताब्दीसम्बद्धेन अमलानन्दयतिना विरचिता कल्पतरुनाम्नी भामतीव्याख्या, तस्याश्च श्रीमता अप्पय्यदीक्षितेन्द्रेण विरचिता परिमल-व्याख्या च विदुषां परिचिते एव । सप्तदशशताब्दीयो लक्ष्मीनृसिंहः कल्पतरोरेवान्यां व्याख्याम् आभोगाख्यां न्यबध्नात् । ऋजुप्रकाशिका, भामतीतिलकम्, भामतीविलास इत्याद्या अपि व्याख्यास्तैस्तैः पण्डितै-र्विरचिता दृश्यन्ते । एवं व्याख्योपव्याख्याभिः समुपबृंहिते पञ्चपादिका-भामतीव्याख्ये श्रीमद्भिः शङ्करभगवत्पादैः प्रतिपादितम् अद्वैतसिद्धान्तं संभाव्यमानतत्तदाशङ्कानिराकरणपूर्वकं सोपपत्ति च सुदृढं स्थापयतः । पञ्चपादिकाप्रस्थानं स्वगभीराशयविवृतिरूपस्य विवरणस्यैव नाम्ना विवरणप्रस्थानमिति पण्डितलोके प्रथामगात् ।

श्रीमद्भिः शङ्करभगवत्पादैः सिद्धान्ततया स्थापितस्य औपनिषदस्य अद्वैततत्त्वस्य विषये न केषामपि अर्वाचीनानां व्याख्यातृणाम् आचार्याणां

विप्रतिपत्तिः । अतिसूक्ष्ममिमद्वैततत्त्वं विनेयबुद्धिमध्यारोपयितुं प्रकल्पितेषु प्रक्रियाविशेषेष्वेव ते विप्रतिपद्यन्ते । सर्वेऽप्येते प्रक्रियाविशेषाः काश्चित् श्रुतीः, भाष्येषु तत्र तत्र भगवत्पादानां विभिन्ना उक्तीः, तदनुसारेण च स्वयं कल्पिता युक्तीश्चावलम्ब्य प्रवृत्ता इति सर्वेषामप्येषां यथारुचि प्रामाण्य-मङ्गीक्रियते विद्वद्भिर्यावन्न भवेद् व्याघातः प्रधानस्याद्वैतसिद्धान्तस्य । अत एवोक्तं श्रीमता अप्पय्यदीक्षितेन्द्रेण सिद्धान्तलेशसङ्ग्रहस्य प्रारम्भे–

**"अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा**
**सरिदिव महीभेदान् सम्प्राप्य शौरिपदोद्गता ।**
**जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता**
**जननहरणे सूक्तिर्ब्रह्माद्वयैकपरायणा"** ॥ इति ।
**"प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं**
**सन्नह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः"** ॥ इति च ।

"पारमार्थिकाद्वैतज्ञानप्राप्तिरेव मुमुक्षूणां प्रधानं लक्ष्यम् । तदवाप्तये च भ्रान्तिकल्पितानां जगज्जीवेश्वराणां विषये या याः कल्पना उपयुज्येरन् ताः सर्वा अपि ग्राह्या एव, सर्वा अपि ताः कल्पना अव्यवस्थिताः" इति प्रत्यपादि श्रीसुरेश्वचार्यैर्बृहदारण्यकभाष्यवार्त्तिके–

**"यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।**
**सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता"** ॥ इति ।

वैयाकरणा अपि शब्दव्युत्पत्तिविषय एतमेव पन्थानम् अनुसरन्ति । अखण्डं किल वाक्यमेव पारमार्थिकम्, तद्बोधितो वाक्यार्थश्च, तत्प्रतीत्यु-पायतयोपयुज्यमानः पद-प्रकृति-प्रत्ययादिविभागः पुरुषबुद्धिमात्रकल्पितः, अतश्चासत्य इत्यभिप्रयन्ति वैयकरणाः । यथाह भर्तृहरिः –

**"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।**
**अनागमविकल्पा तु स्वयं विद्योपतिष्ठते"** ॥
**"उपायाः शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते"** ॥

(वा. प. २।२३३-२३४) इति ।

अतश्च तत्तद्व्याख्यानिर्मातृणामद्वैताचार्याणामवच्छेदवादप्रतिबिम्बवादादयः सुन्दोपसुन्दन्यायेन परस्परं व्याहता इति केषाञ्चिद् वादो मनोरथमात्रम् ।

भामत्या रचयिता तत्रभवान् वाचस्पतिमिश्रो नवमशताब्द्याः पूर्वार्धे मिथिलादेशमलञ्चकार । सर्वतन्त्रस्वतन्त्रोऽयं मिश्रमहोदयः प्रायः सर्वेष्वपि दर्शनेषु प्रामाणिकान् ग्रन्थान् निर्मिमाय, तेषां ग्रन्थानां नामानि यथा–

१. **न्यायकणिका**–मण्डनमिश्रकृतेर्विधिविवेकस्य व्याख्या ।
२. **तत्त्वसमीक्षा**–मण्डनमिश्रस्यैव कृतेर्ब्रह्मसिद्धेर्व्याख्या (अलभ्या) ।
३. **तत्त्वबिन्दुः** – भाट्टमताश्रयः प्रकरणग्रन्थः (कल्पतरुः) ।
४. **न्यायवार्तिकतात्पर्यटीका**–उद्योतकरस्य न्यायवार्तिकस्य टीका ।
५. **न्यायसूचीनिबन्धः** ।
६. **सांख्यतत्त्वकौमुदी**–सांख्यकारिकाव्याख्यारूपा ।
७. **तत्त्ववैशारदी**–व्यास(योग)भाष्यव्याख्या ।

एवं मननतरितीर्णसकलशास्त्रार्णवो वाचस्पतिमिश्रो निरन्तरशास्त्रार्थचिन्तनोपलब्धशेमुषीपरिपाकविशेषे वयसि ब्रह्मसूत्रभाष्यव्याख्यां भामतीं निरमादिति अभ्यूहितुं शक्यते, यतो भामत्या अन्ते तेषां ग्रन्थानां नामानि स निरदिक्षत्–

**"यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।**
**यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥**
**समचैषं महत्पुण्यं तत्फलं पुष्कलं मया ।**
**समर्पितमथैतेन प्रीयतां परमेश्वरः"** ॥ इति ।

सर्वाङ्गपरिपूर्णेयं भामतीव्याख्या अस्माकं सौभाग्यवशेन सम्पूर्णा लभ्यते । "श्रीशङ्करभगवत्पादैः प्रतिपादिता एव विषया मया विभज्य प्रदर्श्यन्ते, न पुनः कोऽप्यपूर्वः प्रतिपाद्यते" इत्यात्मनो विनयातिशयं सूचयन्निवायं महादर्शनिकः स्वकृताया भामत्याः "शङ्करभगवत्पादभाष्यविभागः", "भगवत्पादभाष्यविभागः", "शारीरकभाष्यविभागः" इत्यादिना 'विभाग' इति नाम अकरोत्, न पुनः 'व्याख्या' इति । तत्तत्पादान्तगतासु पुष्पिकासु

इदमेव नामोपलभ्यते, प्रारम्भे चेदमेवाभिधानमस्या व्याख्यायाः सूचितम्–

**"नत्वा विशुद्धविज्ञानं शङ्करं लोकशङ्करम् ।**
**भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते"** ॥ इति ।

अथाद्य व्याख्याया अस्याः स्वतन्त्रप्रस्थानताहेतून् कांश्चिद्विषयान् विवरीतुम् उद्युज्यतेऽस्मिन् लघुनिबन्धे ।

१.**"स्वाध्यायोऽध्येतव्यः"** इति श्रुत्या सर्वस्याप्यधिकारिणः स्वाध्यायाध्ययनं विधीयते । स्वाध्यायमधीयानस्य च "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुतिवाक्यानि श्रुतिगोचरीभवन्ति । वाक्येष्वेतेषु तव्यप्रत्ययान्तपदानां श्रवणाद् विधिवाक्यता एषां निश्चीयते; परन्तु अत्र श्रूयमाणः श्रवणविधिः अपूर्वविधिर्वा, नियमविधिर्वा परिसंख्याविधिर्वा इति संशयः, वेदान्तश्रवणस्य आत्मज्ञानसाधनतायाः प्रमाणान्तरेणाविदितत्वात्, इदंप्रथमतया अनेनैव वाक्येन तदवगतेः अपूर्वविधिरेवायमिति मन्यन्ते अनुभूतिस्वरूपाचार्यादयः । विवरणकारादयः पुनः अस्य नियमविधितामङ्गीकुर्वन्ति । किञ्चिद् वस्तु स्थलूतया पश्यन् कश्चित् पुरुषः "किमत्रत्यं वैशिष्ट्यं भवानद्राक्षीत्?" इति केनापि पृष्टः स्वां दृष्टिमेव पुनः सावधानं तस्मिन् वस्तुनि प्रसार्य तद्गतं विशेषं गृह्णाति । एवमेव अध्ययनविधिचोदितः स्वाध्यायाध्ययनं कुर्वाणः, अहंप्रत्ययगोचरस्य जीवस्य निर्विशेषब्रह्मरूपताम् आपाततो जानन् प्रेक्षावान् तत् तत्त्वं सम्यग् बोद्धुं मानसमात्मनः अधिकं समवधातुं प्रयतेत । तदा तादृशस्य पुरुषस्य वेदान्तश्रवणमेव नैव आवश्यकं भवेदिति तस्य पाक्षिक्येव प्राप्तिर्भवेत् । अतो वेदान्तवाक्यश्रवणद्वारैव आत्मज्ञानसंपादने प्रयतनीयम् इति नियमार्थानीमानि विधिवाक्यानीति तेषामाशयः । तत्रापि शाब्दपरोक्षज्ञानाय श्रवणस्य, शाब्दापरोक्षज्ञानाय मनननिदिध्यासनयोश्च नियमविधिरिति केचित् । शाब्दपरोक्षज्ञानाय श्रवणस्य मानसापरोक्षज्ञानाय मनननिदिध्यासनयोश्च नियमविधिरित्यन्ये । त्रयाणामपि श्रवणमनननिदिध्यासनानां मानसापरोक्षज्ञानायैव नियमविधिरिति परे । एवं नियमविधिताङ्गीकर्तृष्वपि मतभेदा दृश्यन्ते । वेदान्तश्रवणप्रवृत्तानामपि तदा तदा कार्यान्तर-

व्यापृतिः संभाव्यते, तन्निवारणायैव श्रवणादिविधीनां प्रवृत्तिरिति परिसंख्याविधितामेषाम् अङ्गीकुर्वन्ति नैष्कर्म्यसिद्धिकारादयः ।

विधिवाक्यवदाभासमानानामपि "श्रोतव्यः..." इत्यादिवाक्यानां वस्तुतो विषयवैमुख्यसंपादनायैव प्रवृत्तिः, अतो न तेषां विधित्वम् । अत एवोक्तं भगवत्पादैः समन्वयाधिकरणे–

"किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि वचनानि विधिच्छायानि ? साधारणप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" इति । अतश्च नैषां वाक्यानां विधिवाक्यत्वमित्यभिप्रैति वाचस्पतिमिश्रः । वेदान्तश्रवणं हि नाम वेदान्ततात्पर्यविचारः । वेदान्ततात्पर्यविषये भ्रान्तिसंशयादीनामपाकरणमेव प्रयोजनमस्य श्रवणस्य । श्रवणेनावगतस्य तत्त्वस्य पुनः पुनः चिन्तनं मननम् । तत्त्वविषये भ्रान्तेर्विनाशनमेवास्य प्रयोजनम् । औपनिषदतत्त्वस्य पुनः पुनरविच्छिन्ना भावना निदिध्यासनम् । पारमार्थिकतत्त्वविरुद्धानां भावानाम् अपाकरणमेवास्य प्रयोजनम् । एवं निरन्तरकृतनिदिध्यासनः साधकः कालक्रमेण आत्मसाक्षात्कारं लभत इति प्रतिपादितं श्रीमता वाचस्पतिमिश्रेण–

"चतस्रः प्रतिपत्तयो ब्रह्मणि; प्रथमा तावदुपनिषद्वाक्यश्रवणमात्राद् भवति यां किलाचक्षते श्रवणमिति । द्वितीया मीमांसासहिता तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति । तृतीया चिन्तासन्ततिमयी, यामाचक्षते निदिध्यासनमिति । चतुर्थी साक्षात्कारवती वृत्तिरूपा" । (भामती–३।४।२६)

न केवलमात्मतत्त्वस्य, लौकिकानामपि विषयाणां स्पष्टज्ञानरूपे साक्षात्कारे श्रवणादीनां साधनत्वं सर्वविदितमेव, अत एव पद-पदार्थसंबन्धज्ञः सर्वोऽपि विनैव प्रेरणां श्रवणमननादौ प्रवृत्तो दृश्यते । तस्माल्लोकसिद्ध एवायं विषयोऽनूद्यते श्रोतव्यः, मन्तव्य इत्यादिभिः । न पुनरपूर्वतया किञ्चिद्विधीयत इति स्पष्टं प्रतिपाद्यते तत्रभवता वाचस्पतिमिश्रेण–

"अन्वयव्यतिरेकाभ्यां च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात् सकलदुःखविनिर्मुक्तैकचैतन्यात्मकोऽह-

मित्यपरोक्षानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेनानुमानात्तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति । न च दृष्टार्थत्वे सत्यदृष्टकल्पनं युक्तम्" ।

(भामती–४।१।२)

अनुवादवाक्यानामपि प्रवृत्त्युन्मुखीकरणतां विशदयति वाचस्पतिमिश्रमहोदयः समन्वयाधिकरणे–

"अन्यतः प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकरत्वात् । तथा हि– तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति । आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरता अनुवादानामस्तीति सप्रयोजनतया स्वध्यायविध्यधीनग्रहणत्वम् उपपद्यते" ।

(भामती, समन्वयाधिकरणम्, पृ. १३०)

तदेवं निष्कृष्टोऽयमाशयो मिश्रमहोदयस्य– "स्वाध्यायोऽध्येतव्यः" इति विधिवाक्येन चोदितो वेदाध्ययनप्रवृत्तः शब्दार्थज्ञानसंपन्नः पुरुषस्तत्र तत्रोपनिषत्सूपलभ्यमानानि आत्मतत्त्वविषयकानि वाक्यान्यप्यधीते । ततश्च तदर्थसाक्षात्कारार्थं स्वयमेव प्रवर्तत इति न तत्प्रवृत्तौ विधिवाक्यानामपेक्षा । विना पुरुषयत्नं न हि विधिवाक्यशतेनापि किमप्यस्ति प्रयोजनम् । अतश्च नैव "श्रोतव्यः" इत्यादीनां विधिवाक्यताङ्गीकारावश्यकता इति । तदुक्तम्–

"न चास्यात्मज्ञानविधिं विना वेदान्तार्थब्रह्मतत्त्वावबोधो न भवति । मौलिकस्य स्वाध्यायाध्ययनविधेरेव विवक्षितार्थतया सकलस्य वेदराशेः फलवदर्थावबोधनपरतामासादयतो विद्यमानत्वात् । अन्यथा कर्मविधिवाक्यान्यपि विध्यन्तरमपेक्षेरन् इति । न च चिन्तासाक्षात्कारयोर्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपादितम्" ।

२. श्रवणमनननिदिध्यासनेषु कस्य वा ज्ञानोत्पादने प्राधान्यं कयोर्वा सहकारित्वमिति विषयेऽपि मतभेदो दृश्यते । श्रवणमेव प्रधानम्, मनननिदिध्यासने पुनः सहकारिणी इति विवरणकारोऽभ्युपगच्छति; परन्तु वाचस्पतिमिश्रः –

"तस्यापि (विद्योदयस्य) श्रवणमननपूर्वकोपासनाजनितसंस्कारादेव चेतसो भावात्" ।(भामती, समन्वयाधिकरणम्, पृ. ११४)

इति वदन् निदिध्यासनस्य प्राधान्यं, श्रवणमननयोस्तत्सहकारितां चाङ्गीकरोति ।

३. ब्रह्मप्राप्तेः कर्मापि साधनमिति ज्ञायते– "तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने" इत्यादिभिः पुराणवचनैः; परन्तु "नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिवचनैर्ब्रह्मप्राप्तेर्ज्ञानैकसाध्यताप्रतिपादनात् कर्मणां परम्परयैव ब्रह्मप्राप्त्युपायता अङ्गीकर्तव्या । किं कर्मभिः ज्ञानं जायते अथवा ज्ञानेच्छामात्रम् इति विचिकित्सायाम्–"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुत्या यज्ञादीनां कर्मणां विविदिषासाधनत्वमेव, न पुनः वेदनसाधनत्वम् इत्यभिप्रैति मिश्रमहोदयः । पूर्वोदाहृते वाक्ये यज्ञादीनां सन्वाच्यया इच्छयैवान्वयः, न पुनः प्रकृत्यर्थेन ज्ञानेन, प्रकृत्यर्थात् प्रत्ययार्थस्य प्रधानत्वात् । अतश्च यज्ञादयो ज्ञानेच्छामेव जनयन्ति, ज्ञानस्य पुनः शमदमादय एव साधनम् इति प्रतिपाद्यते वाचस्पतिमिश्रेण–

"उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पत्तिद्वारा । 'विविदिषन्ति यज्ञेन' इति श्रुतेः" ।(भामती-३।४।२६)

एवं च ज्ञानस्य शमदमादयः अन्तरङ्गसाधनानि कर्माणि च बहिरङ्ग-साधनानीति मिश्रमहोदयः सूचयति । अत्र च–

"तत्राप्येवं विदिति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्" इति सर्वापेक्षाधिकरणगतानि श्रीशङ्करभगवत्पादानां वचनानि प्रमाणम् ।

अयमेवाशयोऽन्यत्रापि स्पष्टीकृतो वाचस्पतिमिश्रेण–

"इह तु सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनि-युञ्जानः..." (भामती–३।४।३४) इति ।

"आरादुपकारकत्वात् कर्मणां यज्ञादीनाम् । तथा हि तमेतमात्मानं वेदानुवचनेन नित्यस्वाध्यायेन ब्राह्मणा विविदिषन्ति, वेदितुमिच्छन्ति, न तु विदन्ति । वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यात्, प्रधानेन च कार्यसंप्रत्ययात्" ।

(भामती, जिज्ञासाधिकरणम्, पृ. ६१)

यज्ञादीनामपि ज्ञानसाधनता अङ्गीक्रियते विवरणकारादिभिः।

४. आत्मनः अपरोक्षं ज्ञानं किं शब्दादेव जायते उत मनसः ? इत्यत्र मतभेदो दृश्यते भामती-विवरणप्रस्थानयोः। 'अहं सुखी', 'अहं दुःखी' इत्यादिरूपो भ्रान्तिमूलकः सुख-दुःखसाक्षात्कारो दृश्यते जीवस्य। तादृशं ज्ञानं ब्रह्मात्मैक्यसाक्षात्कारेणैवापनोदयितुं शक्यं न पुनः ब्रह्मात्मैक्य-परोक्षज्ञानेन। गुडमाधुर्यनिश्चयज्ञानवतोऽपि हि पित्तोपहतरसनेन्द्रियस्य पुरुषस्य गुडं तिक्ततयैव भासेत यावन्नास्य मधुरतासाक्षात्कारो भवेत्। एवं ब्रह्मात्मैक्यशाब्दपरोक्षज्ञानवतोऽपि पुंसः सुखित्वदुःखित्वादिरूपः अध्यासो नैवापगच्छेद् यावन्नायं मनोवृत्तिरूपं ब्रह्मात्मैक्यसाक्षात्कारं लभेत। निःसंशयस्य वाक्यार्थस्य पुनः पुनरनुसंधानात्मना भावनया लब्धपरिपाके अन्तःकरणे, दूरीकृतेषु त्वंपदार्थसंबद्धेषु उपाधिषु ब्रह्मात्मैक्यसाक्षात्काररूपा काचिद्वृत्तिर्जायते। अतो मन एव अपरोक्षज्ञानजनकमिति प्रतिपादयति वाचस्पतिमिश्रः –

"न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनिर्णयात्। अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात्। तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तः-करणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावय-तीति युक्तम्"। (भामती, जिज्ञासाधिकरणम्, पृ. ५७)

वाचस्पतिमिश्रेणाङ्गीकृतस्य ब्रह्मात्मैक्यमानसिकसाक्षात्कारस्य मूलम् "अपि च संराधने प्रत्यक्षानुमानाभ्याम्" (३।२।२४) इति ब्रह्मसूत्रमेव। इयमेव च शास्त्रदृष्टिरिति प्रतिपादयति कल्पतरुकारो विमलानन्दः –

**"अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा।**
**शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः"** ॥ (१।१।२८)

विषये चास्मिन् मण्डनमिश्रमनुसरति वाचस्पतिमिश्र इति प्रतीयते। उक्तं हि मण्डनमिश्रेण ब्रह्मसिद्धौ–

"ननु तत्त्वज्ञानप्रतिहतश्चेदुत्पन्नोऽपि प्रपञ्चावभासो नात्मसंस्पर्शी, न किञ्चित्करः, न बन्धः, शब्दादेव तस्योत्पत्तेः किमर्थमुपासनादि ? उच्यते– परोक्षरूपं शाब्दज्ञानं, प्रत्यक्षरूपः प्रपञ्चावभासः, तेन तयोरविरोधेन

प्रपञ्चावभासो नात्मासंस्पर्शी, नाकिञ्चित्करः, न तेन बन्धः, यथा प्रमाणान्तरादवसीयमानमाधुर्येऽपि द्रव्ये प्रत्यक्षरूप इन्द्रियद्वारस्तिक्तावभासोऽद्रव्यसंस्पर्शी नाभासमानतया अवतिष्ठते, तथा च तद्द्रव्यं पारमार्थिकतिक्तमिव अनवसितमाधुर्यमिव दुःखाय भवति । उपासनादिना साक्षात्कृतात्मतत्त्वस्य तु सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शी, देवदत्त इव सिंहावभासः" ।

(ब्रह्मसिद्धिः, पृ. १३४)

ब्रह्मात्मैक्यसाक्षात्कारः शब्दादेवोत्पद्यते, "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतेः, इत्यभ्युपगच्छन्ति विवरणकारादयः ।

५. जीवेश्वरयोः स्वरूपविषयेऽपि मतभेदो दृश्यते अनयोः प्रस्थानयोः । उपाधिभेदनिबन्धनोऽयं जीवेश्वरभेदो मिथ्यैव, न यथार्थ इत्यद्वैतसिद्धान्तः । तत्र अविद्यान्तःकरणाद्यवच्छिन्नस्यैवात्मनो जीवेश्वरादिभेद इति प्रतिपाद्यते मिश्रमहोदयेन । अविद्यान्तःकरणादिषु प्रतिबिम्बितो विशुद्ध आत्मा जीवादिभेदेन भासत इति मनुते विवरणकारः । प्रथमस्य अवच्छेदवादः, द्वितीयस्य प्रतिबिम्बवाद इति शास्त्रे प्रसिद्धिः । रूपवत एव पदार्थस्य तादृशे पदार्थान्तरे प्रतिबिम्बितत्वं संभाव्यते । नीरूपस्य आत्मनो नीरूपेऽन्तःकरणादौ कथं वा प्रतिबिम्बितत्वं संभवति ? अतो जीवादीनां प्रतिबिम्बकल्पता वर्ण्यते चेद् वर्ण्यतां नाम, प्रतिबिम्बत्वं तु असंभाव्यमेव इति मन्यन्ते अवच्छेदवादिनः, तथा च अध्यासभाष्ये वाचस्पतिः –

"रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मात्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति, यथाहुः –"शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता" (भामती-अध्यासभाष्यम्) इति, "गगनस्य तु स्वगतसवितृकरादिप्रतिबिम्बद्वारा सलिले प्रतिबिम्बितत्वभ्रमः" । (कल्पतरुः)

वस्तुतो महाकाशादभिन्नोऽपि घटाकाशस्तस्माद् भिन्न इवोपलक्ष्यते, एवमेव अन्तःकरणाद्यवच्छिन्न आत्मा परमात्मनो भिन्न इव जीव इत्युच्यते । अन्तःकरणानवच्छिन्नश्च ईश्वर इति । यथाह तत्रभवान् वाचस्पतिः –

"यथा घटाकाशो नाम न परमाकाशादन्यः, अथ चान्य इव यावद्घटमनुवर्तते ... ... एवमनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवः, न वस्तुतः परमात्मनो भिद्यते" । (भामती –३।२।९)

"भवेदेवं यदि जीवा ब्रह्मणो भिद्येरन्, न त्वेतदस्ति ... ... औपाधिकत्वाच्च भेदस्य घटकरकाद्याकाशवद्विरुद्धधर्मसंसर्गस्योपपत्तेः । 'उपाधीनां च मनोमयः' इत्यादीनां श्रुतेः" । (भामती –२।३।१७)

"मनोमय इत्यादीनामिति–मनोमयादिशब्देषु श्रुतानां मन आदीनामित्यर्थः" । (कल्पतरुः)

६. शुद्धं चैतन्यमेव अविद्याया विषय इति ऐककण्ठ्येनाङ्गीकुर्वन्तोऽपि आचार्यास्तदाश्रयविषये विप्रतिपद्यन्ते । अविद्याया आश्रयोऽपि शुद्धं चैतन्यमेवेति विवरणकारो मन्यते । देवदत्तो घटं न जानाति, अर्थाद् देवदत्ते घटविषयकम् अज्ञानम् अस्तीत्युक्ते अज्ञानस्याश्रयो देवदत्तः, तद्विषयश्च घट इति सुप्रसिद्धमेवेदम् । इमामेव रीतिमनुरुन्धानैः शुद्धचैतन्यस्य अविद्याविषयत्वेऽपि तदाश्रयत्वं जीवस्यैवाङ्गीकर्तव्यम् इति मन्यते वाचस्पतिमिश्रः –

"नाविद्या ब्रह्माश्रया; किन्तु जीवे सा त्वनिर्वचनीयेत्युक्तम्, तेन नित्यशुद्धमेव ब्रह्म" । (भामती-समन्वयाधिकरणम्)

"अनाद्यविद्यावच्छेदलब्धजीवभावः पर एवात्मा स्वतो भेदेनावभासते । तादृशानां च जीवानामविद्या, न तु निरुपाधिनो ब्रह्मणः" ।

(भामती–१।२।६)

तत्र तत्र दृश्यमाना ईश्वरस्य अविद्याश्रयत्वोक्तिस्तु जीवसम्बन्धमूलैव । जीवगताया अविद्याया निमित्तत्वात् तद्विषयत्वाच्च औपचारिकमेव ईश्वरस्याश्रयत्वाभिधानमिति च प्रतिपादितं मिश्रमहोदयेन–

"प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वम् अहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम्, तेन यथा अहिविभ्रमो रज्जूपादानः, एवं प्रपञ्चविभ्रम ईश्वरोपादानः । तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया वा ईश्वरमाश्रयत इति ईश्वराश्रयेत्युच्यते, न त्वाधारतया । विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति" । (भामती–१।४।३)

जीवस्य अविद्याश्रयत्वे वाचस्पतिमिश्रो मण्डनमिश्रस्यैव मतम् अनुसरति । उक्तं हि मण्डनमिश्रेण ब्रह्मसिद्धौ –"यत्तु कस्याविद्येति, जीवानामिति ब्रूमः ... ... ननु जीवा अपि ब्रह्मतत्त्वाव्यतिरेकाद्विशुद्ध-

स्वभावाः, तत् कथं तेष्वविद्यावकाशः ? वार्तमेतत्, न च तावद्बिम्बादवदातात् प्रतिबिम्बं कृपाणादिषु भिन्नम्, अथ च तत्र श्यामतादिरशुद्धिरवकाशं लभते । विभ्रमः स इति चेत्, समानमेतज्जीवानामप्यशुद्धिर्विभ्रमः, अन्यथा दुरवापैव विशुद्धिः स्यादित्युक्तम्" ।

(ब्रह्मसिद्धिः, पृ. १०-११)

७. किम् एकैव अविद्या अथवा अविद्या अनेका इत्यत्रापि मतभेदो दृश्यते अनयोः प्रस्थानयोः । अविद्या एकैव, तस्या एव विविधा अवस्था भवन्ति इति मन्यन्ते विवरणकारादयः, वाचस्पतिमिश्रमहोदयः पुनः अविद्यानाम् अनेकत्वम् अङ्गीकरोति । यावन्तो जीवास्तावत्योऽविद्याः, अत एव स्वश्रिताया अविद्याया नाशेन एकस्य जीवस्य मुक्तावपि इतरजीवाश्रितानाम् अविद्यानाम् अविनष्टत्वाद् न तेषां जीवनां मुक्तिरिति प्रतिपाद्यते मिश्रमहोदयेन–

"न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, येनैवमुपालभ्येम हि । किन्त्वियं प्रतिजीवं भिद्यते, तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवाविद्यापनीयते, न जीवान्तरस्य" ।(भामती –१।४।३) इति ।

८. साधनचतुष्टयसम्पन्नः परिशुद्धान्तःकरणश्च पुमान् अद्वितीयात्मसाक्षात्कारं लभत इत्यद्वैतिनां सिद्धान्तः । परन्तु साक्षात्कारेऽस्मिन् विषयः शुद्धचैतन्यं वा उत उपहितं वा इत्यत्रास्ति विप्रतिपत्तिः प्रस्थानद्वये । सकलोपाधिन्निर्मुक्तं शुद्धचैतन्यमेवैतादृशसाक्षात्कारगोचरम् इत्यभिप्रैति विवरणकारः । मनोवृत्त्युपहितमेव चैतन्यं साक्षात्कारगोचरम्, न पुनः परिशुद्धं चैतन्यम्, स्वप्रकाशस्य तस्य विषयत्वायोगाद् इति प्रतिपाद्यते वाचस्पतिमिश्रेण–

"न चायमनुभवो ब्रह्मस्वभावः, येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः ... ... न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः । तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात्" ।(भामती –१।१।१, पृ. ५७)

"वृत्तिविषयत्वमपि तयैवोपहितस्य, न निरुपाधेः" ।

(कल्पतरुः –१।१।२, पृ. ९०)

९. प्रत्यक्षं बलीयो वा श्रुतिर्बलीयसी वेति विचिकित्सायां दोष रहितत्वात् परत्वाच्च श्रुतिरेव बलीयसी इत्यभिप्रयन्ति विवरणकारादयः। "यजमानः प्रस्तरः" इत्यादीनां श्रुतिवाक्यानां प्रत्यक्षविरुद्धत्वात्तेषां गौणार्थत्वमङ्गीक्रियते। अतः श्रुतित्वसामान्येन न श्रुतेर्बलीयस्त्वम्। तात्पर्यवत्येव श्रुतिः प्रत्यक्षादेर्बलीयसी इति वाचस्पतिमिश्रः सूचयति–

"... ... अद्वैतवाक्यजातस्य उपक्रमादितात्पर्यलिङ्गयुक्तत्वेन प्राबल्यात्तदुपजीव्यस्य प्रत्यक्षस्यैव व्यावहारिकविषयसमर्पणेन उपमर्दः कल्पयितुं युक्त इति ... ... तात्पर्यवता वाक्येन उपजीव्योपमर्दस्य दर्शितत्वात्"। (परिमलः, जिज्ञासाधिकरणम्, पृ. १०)

एवं तत्रभवान् वाचस्पतिमिश्रो न केवलं जीवाविद्येश्वरादिषु प्रधानतमेषु विषयेषु अन्येष्वपि सृष्टिप्रक्रियादिसम्बद्धेषु स्वीयं स्वतन्त्रं मतं सूचयति। उदाहरणतया–साम्प्रदायिकं पञ्चीकरणमनादृत्य श्रुतिप्रतिपादितं त्रिवृत्करणमेव अङ्गीकरोत्ययम् आचार्येन्द्रः। अमुमेव विषयं विशदीकरोतिं कल्पतरुंकारः –"तथापि तेजोबन्नानामेव त्रिवृत्करणस्य विवक्षितत्वात्" (भामती –१।१।५, पृ. ६३८) इति भामतीवाक्यव्याख्यानावसरे–

**"सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।**
**तथापि युक्तियुक्तत्वाद्वाचस्पतिमतं शुभम्॥**
**पृथिव्यबनलात्मत्वं गगने पवने च चेत्।**
**रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं प्रसज्यते॥**
**अर्धभूयस्त्वतः क्षित्याद्यविभावनकल्पने।**
**व्यवहारपथप्राप्ता मुधा पञ्चीकृतिर्भवेत्॥**
**अनपेक्षफलं वेदसिद्धेत्येषेष्यते यदि।**
**त्रिवृत्कृतिः श्रुता पञ्चीकृतिर्न क्वचन श्रुता"॥**

(कल्पतरुः –१।१।५)

तदेवम् आचान्तसकलदार्शनिकसिद्धान्तसारः, निरन्तरशास्त्रार्थचिन्तन-विशदीकृतप्रातिभचक्षुरवलोकितनैकतात्त्विकांशस्तत्रभवान् वाचस्पतिमिश्रः क्वचिद् भगवत्पादैस्तत्र तत्राविष्कृतानाम् अद्वैतसम्बद्धानां विविधविषयाणां समन्वयनेन, क्वचित् सम्यक् परिशीलितानां मण्डनमिश्रादिमतानां स्वीकरणेन,

क्वचिच्च स्वमनोनिकषग्रावसंघृष्टिपरीक्षितानां लब्धश्रुत्यामोदानामंशानामाविष्करणेन च सुरुचिरं प्रस्थानमेकं प्रवर्तयामास, यस्यैव च भामतीप्रस्थानमिति नाम्ना प्रथितिर्लोकेऽद्य दृश्यते । यथा पूर्वं सूचितं, मण्डनमिश्रसूचितामपि सरणिं तत्र तत्रानुरुन्धानस्यास्याचार्यस्य श्रीमच्छङ्करभगवत्पादेष्विव श्रीमण्डनमिश्राचार्येऽपि महती भक्तिः, या हि विधिविवेकभामत्योः प्रारम्भे संदृब्धेन–

"आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति" ॥

इति श्लोकेन सूच्यते ।

भामतीप्रस्थानगतविशेषनिरूपणपरमिमं लघुप्रबन्धं वाचस्पतिमिश्रमहोदयस्यान्तेवासिना सनातनेन निर्मितेन श्लोकद्वयेन समापयामः –

"नाभ्यर्थ्या इह सन्तः स्वयं प्रवृत्ताः, न चेतरे शक्याः ।
मत्सरपित्तनिबन्धनमचिकित्स्यमरोचकं येषाम्" ॥

"शङ्के संप्रति निर्विशङ्कमधुना स्वाराज्यसौख्यं वह-
न्नेन्द्रः सान्द्रतपःस्थितेषु कथमप्युद्वेगमभ्येष्यति ।
यद्वाचस्पतिमिश्रनिर्मितमितव्याख्यानमात्रस्फुट-
द्वेदान्तार्थविवेकवञ्चितभवाः स्वर्गेऽप्यमी निस्पृहाः" ॥ इति ।

(भामती –४।१।१)

●

## श्रीमदप्पय्यदीक्षितस्य न्यायरक्षामणिः

श्रीमानप्पय्यदीक्षितः षोडश्यां कैस्तवशताब्द्याम्, न केवलं द्रविडदेशे सर्वस्मिन्नपि भारते देशे विश्रुतोऽखण्डपाण्डितीमण्डितो विद्वन्मणिरासीत् । जगद्विख्यातो वैयाकरणः श्रीमान् भट्टोजिदीक्षितः अप्पय्यदीक्षितात् किल अध्यात्मविद्यामध्यैष्ट । तन्त्रसिद्धान्तदीपिकायां स अप्पय्यदीक्षितम् एवं तुष्टाव–

**"अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।**
**यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजनोपाधी"** ॥ इति ॥

सर्वतन्त्रस्वतन्त्रस्य अप्पय्यदीक्षितस्य वैदुष्यं सर्वत्रापि भारते देशे विशेषतश्च दक्षिणदेशे, तस्य जीवनकाल एव प्रसिद्धमभवत् । तस्य भ्रातुः पौत्रो वक्रोक्तिभरितकाव्यरचनाचणो नीलकण्ठदीक्षितः अप्पय्यदीक्षितस्येमां कीर्तिम् एवं वर्णयति–

**"यं विद्म इति यद्ग्रन्थानभ्यस्यामोऽखिलानिति ।**
**यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः"** ॥

अद्वैतसिद्धान्तसमर्थकस्य, सर्वदेवाभेददर्शिनोऽपि अप्पय्यदीक्षितस्य परम-शिवाराधने महती निष्ठा अभिरुचिश्चासीत् । यथोक्तं तेनैव–

**"महेश्वरे वा जगतामधीश्वरे**
**जनार्दने वा जगदन्तरात्मनि ।**
**न भेदलेशप्रतिपत्तिरस्ति मे**
**तथापि भक्तिस्तरुणेन्दुशेखरे"** ॥ इति ॥

तस्मिन् काले दक्षिणदेशे विजृम्भमाणानां वैष्णवानामौद्धत्यं निरोद्धु-कामः अप्पय्यदीक्षितः शिवपारम्यं स्थापयितुं नैकान् ग्रन्थान् जग्रन्थ । श्रुतिषु पुराणेषु च बहुधा प्रतिपादितं शिवस्य पारम्यम् अनङ्गीकुर्वद्भिः कैश्चिद् निरूढशिवद्वेषैः पण्डितंमन्यैः प्रतिपाद्यमानां तस्य जीवताम्, विष्णोरेव पारम्यं चासहमानः अप्पय्यदीक्षितः स्वयंकृतव्याख्यायां षष्टिश्लोकात्मिकायाम्

आनन्दलहर्यां विष्णोः जीवत्वं प्रतिपादयितुं नैकप्रमाणोपबृंहिता युक्तीः प्रादर्शयत् । अन्ते च आनन्दलहर्याः पञ्चत्रिंशत्तमश्लोकस्य व्याख्यायां स्वसिद्धान्तं विवृण्वन् एवमलिखत्–" ......निश्चितपरब्रह्मभावस्य, सद्भिः सर्वैरप्यविभागेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित् कोणे निविष्टमन्त्रार्थवादपुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते । तथा चेन्मूर्धा शतधा भवति, वैदिकद्रोहो नारायणद्रोहश्च जायते । अतो नारायणः परब्रह्मकोटिरित्येवास्माकं सिद्धान्तः" इति ।

वरदराजस्त्व-तद्व्याख्यादिनिर्मातुः अङ्गीकृताद्वैतसिद्धान्तस्य च अप्पय्य-दीक्षितस्य विष्णुद्वेषः स्वप्नेऽप्यसम्भाव्यः, केवलं शिवनिन्दकानां वादान् व्युदासितुमेव तस्य सर्वेऽपि यत्नाः, यत्र तेन सुमहत् साफल्यमलम्भि । अत एवायमेवाहान्यत्रापि–

**"विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमि-**
**र्नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ।**
**किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां दुरुक्ती-**
**र्भङ्क्तुं यत्नो ममायं न हि भवति (तु) ततो विष्णुविद्वेषशङ्का"** ॥ इति ।

श्रीमता अप्पय्यदीक्षितेन अल्पप्रमाणाः, बृहत्प्रमाणाश्च चतुरुत्तरशतं ग्रन्था निर्मिताः, अत एवास्य "चतुरधिकशतप्रबन्धनिर्वाहकः" इति बिरुदमासीत् । तेष्वद्य षष्टिरेव उपलभ्यते । पूर्वोत्तरमीमांसयोः असदृश-पाण्डितीमण्डितोऽसौ अलङ्कारशास्त्रसम्बद्धां **'कुवलयानन्दः'**, **'चित्रमीमांसा'**, **'वृत्तिवार्तिकम्'** इति ग्रन्थत्रयीं जग्रन्थ । एतन्निर्मिता इमे वेदान्तशास्त्रग्रन्था अद्योपलभ्यन्ते– (१) **शास्त्रसिद्धान्तलेशसंग्रहः**, (२) **न्यायरक्षामणिः**, (३) **कल्पतरुपरिमलः**, (४) **मध्वतन्त्रमुखमर्दनम्**, (५) **तद्व्याख्या– 'मध्वमतविध्वंसनम्'** (६) **पूर्वोत्तरमीमांसावादनक्षत्रमाला (अस्या एव नाम 'नक्षत्रवादावली' इति)**, (७) **चतुर्मतसारसंग्रहः**, (८) **शिवार्कमणिदीपिका** च ।

**"शिवार्कमणिदीपिका"** शिवविशिष्टाद्वैतस्थापकस्य नीलकण्ठाचार्यस्य ब्रह्मसूत्रभाष्यस्य अतीव विस्तृता व्याख्या । इमां च व्याख्याम् अप्पय्य-दीक्षितः स्वाश्रयदातुः चिनबोम्मनायकाख्यस्य राज्ञः प्रार्थनया अरचयत् ।

अत्र अप्पय्यदीक्षितेन प्रदर्शितो नैकपुराणादिपरिचयो नितराम् आश्चर्यं तनोति पठितॄणाम् । अप्पय्यदीक्षितः स्वयमेवेमां व्याख्यां विदुषां पञ्चशतीं पाठयामास । वैष्णवमतप्रतिस्पर्धितया शैवमतसमुद्धरणे बद्धदीक्षः स राजा तेभ्यः सर्वेभ्यो विद्वद्भ्य आवासादिकं किल उपकल्पयामास । अद्वैतवादिनोऽप्यात्मनोऽस्या व्याख्याया निर्माणे प्रवृत्तिं समर्थयन्नप्पय्यदीक्षितो व्याख्यायाः प्रारम्भे लिखति–

**"यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा**
**साकं सर्वैः पुराणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः ।**
**तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति**
**प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव" ॥**
**"तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।**
**अद्वैतवासना पुंसामाविर्भवति नान्यथा"** ॥ इति ।

एवं सकलशास्त्रपारदृश्वनः, अद्वैतविद्याचार्यस्य अप्पय्यदीक्षितस्य वेदान्तग्रन्थेषु प्रथमपरिगणनीयस्य न्यायरक्षामणेर्वैशिष्ट्यं स्थालीपुलाकन्यायेन द्वित्रोदाहरणप्रदर्शनपूर्वकं प्रतिपाद्यते ।

**न्यायरक्षामणिः** ब्रह्मसूत्राणां प्रथमाध्यायस्य शङ्करभगवत्पादभाष्यानुसारिणी व्याख्या । अत्र भगवत्पादानां भाष्यविषये रामानुज-श्रुतप्रकाशिकाकारादिभिर्विशिष्टाद्वैतिभिर्ये वा आक्षेपाः कृताः , तेषां समाधानं तेषां नामान्यनिर्दिश्यैव कृतमप्पय्यदीक्षितेन । सर्वासामुपनिषदाम् अद्वितीये ब्रह्मण्येव तात्पर्यमिति विवक्षितोऽर्थो ब्रह्मसूत्राणाम् । यदुक्तं शङ्करभगवत्पादैः –"वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" (ब्र. सू., शा. भा. १।१।२) इति । वेदान्तवाक्यानां ब्रह्मणि समन्वयः प्रथमाध्याये प्रतिपादितः । अत एवास्य समन्वयाध्याय इति नाम । तत्र प्रथमपादे स्पष्टब्रह्मलिङ्गानां श्रुतीनां, द्वितीयतृतीयपादयोः अस्पष्टब्रह्मलिङ्गानां श्रुतीनां, चतुर्थपादे अव्यक्तादिसंदिग्धार्थपदानां च समन्वयः प्रदर्शितः । उपनिषदर्थनिर्णायकतयाऽस्याध्यायस्य सुमहत् प्राधान्यम् । प्रथमत उपनिषत्तात्पर्यनिर्णयानन्तरमेव किल

अन्यमतखण्डनमोक्षस्वरूपनिरूपणादीनाम् उत्थितिः ।अतोऽप्पय्यदीक्षितः प्रथमाध्यायस्यैवास्मिन् न्यायरक्षामणौ व्याख्यां चकार ।

यथा अभिमन्त्र्य बालादीनां कण्ठे बद्धो मणिस्तेषां रक्षां करोति तथायं शारीरकन्यायानां शङ्करभगवत्पादप्रतिपादितानां रक्षां करोतीति सार्थकमस्य नाम, शारीरकभाष्यव्याख्यासु ये वा मतभेदा दृश्यन्ते तेषां समन्वयः, अन्यैः कृतानामाक्षेपाणां परिहारश्च महता नैपुण्येन संपादितौ अप्पय्य-दीक्षितेन । प्रतिज्ञातं हि तेन ग्रन्थारम्भे–

"अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभागान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा" ॥
"एनां पुराणपदवीमनुसृत्य सत्याम्
अत्यादरेण महतीमनुपाल्यमानाम् ।
शारीरकाभरणभावजुषां नयानां
रक्षाकरं मणिमनाकुलमुल्लिखामि" ॥
"अमुं शारीरकन्यायकलापपरिकर्मितम् ।
कुदृष्टिदोषहरणं कण्ठे कुरुत सन्मणिम्" ॥ इति ।

प्रथमाध्यायगते सूत्रद्वयात्मके अन्तरधिकरणे छान्दोग्योपनिषद्गतम्– "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यः, य एवं वेद, तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथः, तस्मात्त्वेवोद्गाता एतस्य हि गाता । स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च इत्यधिदैवतम् ..." । (छा. उ.१।६।६-७) अथाध्यात्मम्– "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तदुक्थं, तत्साम, तद् यजुस्तद् ब्रह्म, तस्यैतस्य तदेव रूपं यदमुष्य रूपम्, यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम, स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्य-

कामानां च" । (छा. उ. १।७।५) "तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः" । (छा.उ. १।७।६) इति विषयवाक्यतया परिगृह्य किमस्मिन् आदित्यमण्डलाभिमानी कश्चिज्जीवो वर्ण्यते उत परमेश्वरः प्रतिपाद्यत इति विचारः प्रवर्तितः । अस्मिन्नधिकरणे प्रथमं सूत्रम्– **"अन्तस्तद्धर्मोपदेशात्"** (ब्र. सू. १।१।२०) इति । पूर्वोदाहृतायां श्रुतौ वर्णितस्यादित्यपुरुषस्य रूपवत्त्वम्, 'अन्तरादित्ये', 'अन्तरक्षिणि' इति आधारवत्त्वम्, "स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इति, "स एष ये चास्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इति ऐश्वर्यमर्यादावत्त्वं च श्रूयते, अतः अक्ष्यादित्ययोरन्तः जीव एव इति पूर्वपक्षोऽनेन सूत्रेण निराकृतः । सूत्रमेतद् व्याचक्षाणाः शङ्करभगवत्पादाः "तस्य परमेश्वरस्य धर्माणामुपदेशाद् अन्तरादित्ये अन्तरक्षिणि च पुरुषः परमेश्वर एव" इति व्याख्याय–**"स एष सर्वेभ्यः पाप्मभ्य उदितः"** इत्युक्तः सर्वपाप्मापगमः, ऋक्सामाद्यात्मकतानिर्धारणेन सूचितं सर्वकारणत्वम्, सर्वात्मकत्वं, लौकिकगानेष्वपि गीयमानत्वं, लोककामेशितृत्वम् इत्यादयः सर्वेऽपि धर्माः परमेश्वर एवोपपन्ना इति न्यरूपयन् । हिरण्यश्मश्रुत्वादयश्च जीवधर्माः परमेश्वरस्य सगुणरूपे कल्पिता इति न कोऽपि विरोधः । परमेश्वरस्य जीवानुग्रहार्थं मायाकल्पितरूपग्रहणसमर्थत्वाद् इति च प्रत्यपीपदन् ।

अप्पय्यदीक्षितस्तु–प्रथमश्रुतादपि लिङ्गाद् अविवक्षितात् चरमश्रुतमपि प्रयोजनवत् लिङ्गं बलीय इति न्यायमनुरुन्धानः सर्वपाप्मोदय एव ब्रह्मणोऽविनाभाविलिङ्गम् । **"उदेति ह वै सर्वेभ्यः पाप्मभ्यः"** इति प्रयोजनस्य श्रुतत्वात् तदेव सफलम्, "अत एकमपि तल्लिङ्गं निश्चिततात्पर्यम्, अतादृशादनेकस्मादपि रूपवत्त्वादिलिङ्गाद् बलवत्, तात्पर्यानुसारित्वादागमप्रमाणस्य" इति प्रतिपादयन् सूत्रमेवं व्याख्यत्– "आदित्ये अक्षणि च उपासनासिद्धैर्दृश्यः, उद्गीथे संपाद्यः पुरुषः परमेश्वर एव, सफलानन्यथासिद्धसर्वपापविरहलिङ्गबलेन अतादृशान्यथासिद्धरूपवत्त्वादिलिङ्गान्यथाकरणसम्भवाद् इति सिद्धम्" इति ।

अस्मिन्नर्थे सूत्रस्वारस्यमप्येवं प्रदर्शितं दीक्षितेन– **"अदृश्यत्वादिगुणको धर्मोक्तेः"** (ब्र. सू. १।२।१ ) इतिवत् सूत्रे "धर्मोपदेशात्" इत्येतावति वक्तव्ये ('तद्धर्मोपदेशात्' इति) तत्पदं 'तस्यैव धर्मः' इति अब्भक्षादिवद् अवधारणगर्भतया फलवचनाद्यनुसारेण सर्वपापविरहरूपतया पर्यवसितस्य सर्वपापोदितत्वस्य आदित्यजीवे सम्भवाभावरूपमनन्यथासिद्धत्वं, तद्विचारद्वारा तत्प्रतिभटस्य रूपवत्त्वादेर्ब्रह्मण्यपि सम्भवरूपमन्यथासिद्धत्वं च सिद्धान्तबीजं ज्ञापयितुम् । **"आकाशस्तल्लिङ्गात्"** (ब्र. सू. १।१।२२) इतिवत् 'तद्धर्मात्' इत्येतावति वक्तव्ये 'उपदेश'ग्रहणं, तद्धर्मस्यैवोपदेशात् फलवचनावगतेन तात्पर्येण प्रतिपादनाद् इत्यर्थकतया सफलत्वरूपतात्पर्यलिङ्गवत्त्वम्, तत्प्रति-भटतया रूपवत्त्वतद्गतादित्य-मण्डलादिनिष्ठत्वयोरैन्द्रजालिकदर्शिताद्भुतरूप-विशेषतद्गतगोपुरारूढत्वयोरिव दर्शनविषयतया अनुवाद्यत्वेन, ऐश्वर्य-मर्यादायाः श्रुत्यन्तरसिद्धे सर्वैश्वर्ये उपास्यतया अवयुत्यानुवाद्यत्वेन च पूर्वपक्ष्यापादितरूपादिप्रामाण्यपरिहारं च ज्ञापयितुम् ।

एवं 'तद्धर्मोपदेशात्' इत्यस्य --"तस्यैव परमात्मन एव, यो धर्मः, तस्यैवोपदेशात्, तात्पर्येण प्रतिपादनात्" इत्यर्थं प्रतिपाद्य, "किञ्च तद्धर्मयोः उपदेशाद् इति द्विवचनान्तसमासेन ब्रह्मैकधर्मस्य सार्वात्म्यस्य प्रतिपादनाद् इत्यपि हेतोरित्यर्थः" इति लिखन् दीक्षितः "धर्मस्योपदेशः" इति व्याख्यानन्तरम् "धर्मयो उपदेशः" इति वा भगवत्पादोक्तविधया "धर्माणामुपदेशः" इति वा व्याख्यानेऽपि न दोष इति सूचयति । तेषु सर्वपाप्मविरहितत्वं साक्षात् प्रतिपादितो धर्मः, सर्वकारणत्व-सर्वात्मकत्व-लौकिकगानगीयमानत्वलोककामेशितृत्वादयस्तु ऋक्सामरूपतादिवर्णनेन सूचिता धर्मा इति प्रतिपादन एव भगवत्पादानां तात्पर्यम् । सर्वपाप्मोदितत्वमेव तात्पर्येण विवक्षितो धर्म इति तैरेव सूचितं प्रथमतस्तमेव धर्मं प्रतिपाद-यद्भिः ।

एवम् अप्पय्यदीक्षितोऽस्मिन्नधिकरणे–"निर्विशेषब्रह्मवादे सूत्रस्वारस्यं नास्ति" इति परेषां मतं निराकर्तुं–"रूपवत्त्वं च ब्रह्मणोऽपि संभवति । सत्यस्य रूपस्य नीरूपशास्त्रविरोधेऽपि मायामयस्य तदविरोधात्" इति लिखन्ति । एवम्–"उपासनार्थमपि रूपवत्त्वस्य आरोपितत्वमयुक्तम्, न

ह्यारोपितं दृश्यते" इत्यादि परेषां वादं निराकर्तुं–"ब्रह्मणि च रूपस्य "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद" इति वचनानुसारेण मायामयस्यैवाङ्गीकारात् । न च तद्बोधकवचनानामप्रामाण्यप्रसङ्गः, मायाविदर्शितमायादृष्ट्यनुवादवत् प्रामाण्योपपत्तेः । इह च "हिरण्मयः पुरुषः दृश्यते "यन्मां पश्यसि" इत्यादौ तथैव दृष्ट्यनुवाददर्शनाच्च" इत्यादि प्रतिपादयति विनैव प्रतिवादिमतानुवादम् ।

न्यायरक्षामणौ दीक्षितेन महती सूत्रव्याख्याननैपुणी प्रदिर्शिता, उदाहरणतया आनन्दमयाधिकरणं पश्यामः । तस्मिन्नधिकरणे वृत्तिकारेण प्रतिपादितम् आनन्दमयस्य ब्रह्मत्वं प्रथमतोऽनूद्य, भगवत्पादास्तस्या व्याख्याया असङ्गतत्वं प्रदर्श्य, पुच्छवाक्यस्यैव ब्रह्मपरतां प्रत्यपादयन्, आनन्दमयस्य च जीवत्वम्, तदनुसारेण सूत्राणि एवं व्याख्यातानि भगवत्पादैः – **"आनन्दमयोऽभ्यासात्"** (ब्र. सू. १।१।१२) "ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्र किमानन्दमयावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति शङ्कायां पुच्छशब्दावयवत्वेनेति प्राप्ते उच्यते– "आनन्दमयोऽभ्यासात् । "आनन्दमय आत्मा" इत्यत्र ब्रह्मपुच्छं प्रतिष्ठा इति स्वप्रधानमेव ब्रह्मोपदिश्यते । "असन्नेव स भवति" इत्यस्मिन्निगमनवाक्ये ब्रह्मण एव केवलस्य अभ्यस्यमानत्वात्" इति ।

अप्पय्यदीक्षितस्तु एवं व्याचख्यौ–"आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्यम् । "असन्नेव स भवति" इति निगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वात्" इति । ततश्च "आनन्दमय एव निगमनश्लोकविषयोऽस्तु, अतश्च असिद्धोऽयं हेतुः" इति शङ्कामुद्भाव्य, **"ईक्षतेर्नाशब्दम्"** (ब्र. सू. १।१।५) इति सूत्राद् नञमनुवर्त्य–"आनन्दमयो न निगमनश्लोकप्रतिपाद्यः, तत्र ब्रह्मशब्दाभ्यासदर्शनात्" इति व्याचख्यौ ।

**"विकारशब्दान्नेति चेन्न प्राचुर्यात्"** (ब्र. सू. १।१।१३) –भगवत्पादा एवं व्याचख्युः –"विकारशब्दात्, अवयववाचकपुच्छशब्दाद् न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं तन्न, प्राचुर्यादप्यवयवशब्दोपपत्तेः, प्राचुर्यं प्रायापत्तिः । अवयवप्राये वचनमित्यर्थः, अन्नमयादीनां हि शिर आदिषु पुच्छान्तेषु

अवयवेषूक्तेषु आनन्दमयस्यापि शिर आदीन्यवयवान्तराणि उक्त्वा अवयव-प्रायापत्त्या 'ब्रह्मपुच्छं प्रतिष्ठा' इत्याह" इति ।

अस्य अप्पय्यदीक्षितकृता व्याख्या– 'विकार'शब्देनावयवो लक्ष्यते । तद्वाची पुच्छशब्दो विकारशब्दः, स एव विकारो विगतकार्योऽनर्थक-शब्दः । "अकर्तरि च कारके संज्ञायाम्" (पा. सू. ३।३।१९) इति कर्मणि घञन्तः कारशब्दः कार्यवाची । एवमर्थान्तरस्यापि गर्भाकरणाय 'अवयव-शब्दात्' इति वक्तव्ये 'विकारशब्दात्' इत्युक्तम् । तथा च पुच्छावयव-वाचिनस्तदर्थपरित्यागे लक्षणीयार्थाभावेन प्रसक्तानर्थक्यात् पुच्छशब्दाद्धेतोर्न ब्रह्म प्राधान्येन प्रतिपाद्यम् इति चेद् इति शङ्कार्थः । 'प्राचुर्यात्' इत्यस्य भगवत्पादोक्त एवार्थः, एवमत्र 'विकार'शब्दप्रयोगस्य सार्थक्यं सुनिपुणं प्रत्यपादयदप्पय्यदीक्षितः ।

तृतीयं **"तद्धेतुव्यपदेशाच्च"** (ब्र. सू. १।१।१४) इति सूत्रं– "सर्वस्य हि विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते" इति व्याख्याय भगवत्पादाः – "अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि" इत्युक्त्वा अधिकरणमिममुपसमाजह्रुः । अप्पय्यदीक्षितोऽस्य सूत्रस्य अन्येषां च पञ्चानां सूत्राणां व्याख्यां महता नैपुण्येनाकरोत् ।

अस्मिन् सूत्रे तच्छब्दमानन्दमयपरं स्वीकृत्य आनन्दमयहेतुत्वप्रति-पादनात् पुच्छब्रह्मणस्तस्यैव प्राधान्यम् इति प्रतिपाद्य, अत्रत्येन तच्छब्देन आनन्दमयस्य परिग्रहणार्थमेव सूत्रकृता "ब्रह्मपुच्छमभ्यासात्" इति आर्ज-वेन सूत्रे कर्तव्ये "आनन्दमयोऽभ्यासात्" इति सूत्रितम् इति सूत्रगत-पदस्वारस्यमपि न्यरूपयत् ।

**"मान्त्रवर्णिकमेव च गीयते"** (ब्र. सू. १।१।१५)– "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णे स्वप्रधानतया प्रकृतस्य ब्रह्मण एव प्राधान्यम् अङ्गी-करणीयम्, उपक्रमगतत्वात् । न तु पुनस्तदनन्तरमुक्तस्य आनन्दमयस्य इति । अनेन च न केवलमुपसंहारगतप्रमाणानुरोधेन, परमोपक्रमानुसारे-णापि आनन्दमयवाक्यस्य ब्रह्मप्राधान्यं सिद्ध्यतीति भावः ।

**"नेतरोऽनुपपत्तेः"** (ब्र. सू. १।१।१६)– "ब्रह्मविदाप्नोति परम्" इत्यादिपूर्वसन्दर्भस्य, "असन्नेव स भवति" इत्याद्युत्तरसन्दर्भस्य च ब्रह्म-प्राधान्येऽपि आनन्दमयवाक्यस्य आनन्दमयप्राधान्यम्, तत्र ब्रह्मणः कल्पित-पुच्छभावेन उपसर्जनत्वं चास्तु इति शङ्कया अपनोदाय इदं सूत्रम् । इतरः= आनन्दमयः, न=प्राधान्येन न प्रतिपाद्यः, अनुपपत्तेः=उपक्रमोपसंहारावगत-ब्रह्मप्राधान्यविरोधेन उपास्यानन्दमयविशेषणगतगुणसमर्पणार्थत्वकल्पनानुप-पत्तेः, इति तदर्थः ।

**"भेदव्यपदेशाच्च"** (ब्र. सू. १।१।१७)– छान्दोग्ये "गायत्री वा इदं सर्वं भूतम्" इत्यादिकस्य पूर्वसन्दर्भस्य, "सर्वं खल्विदं ब्रह्म" इत्याद्युत्तर-सन्दर्भस्य च ब्रह्मप्राधान्येऽपि मध्ये कौक्षेयज्योतिष उपास्यस्य प्राधान्यम्, तत्र च दृष्टिविशेषणतया ब्रह्मण उपसर्जनत्वं च यथा इष्टं तथात्रापि मध्यगते आनन्दमयवाक्येऽपि ब्रह्मणः पुच्छभावेन उपसर्जनत्वमस्तु इति शङ्का सूत्रेणानेन निरस्यते– "भेदविरोधी अपदेशो भेदव्यपदेशः । भेदप्रपञ्च-मिथ्यात्वपर्यवसायी–

**"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।**
**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" ॥**

इत्युपदेशः, तद्विरोधात् प्रियाद्यवयवयुक्तः सविशेष आनन्दमय उपास्यो न प्रतिपाद्यः" इति सूत्रार्थः ।

**"कामाच्च नानुमानापेक्षा"** (ब्र. सू. १।१।१८)– भृगुवल्ल्यामन्नप्राण-मनोविज्ञानक्रमेण पञ्चमपर्यायाम्नातस्यानन्दस्य प्राधान्यं दृश्यते । तथा आनन्दवल्ल्यामपि अन्नमयादिक्रमेण पञ्चमपर्यायाम्नातस्यानन्दमयस्य स्थान-साम्यात् प्राधान्यम् अनुमीयत इति शङ्कायाम् इदं सूत्रमुच्यते–काम्यत इति कामः, भृगुवल्ल्यामाम्नात आनन्दः । तद्दृष्टान्तमवलम्ब्यानन्दमयस्य प्राधान्यानुमानेऽपि प्रत्याशा न कर्तव्या । तत्र श्रुत्यैव आनन्दस्योपक्रान्तब्रह्म-रूपताया "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिना पर्यवसानप्रतिपादनात् । इह तु आनन्दमयस्य न प्राधान्यमिति सूत्रार्थः ।

**"अस्मिन्नस्य च तद्योगं शास्ति"** (ब्र. सू. १।१।१९)– अस्मिन्नेव प्रकरणे "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति" इति शास्त्रं "रसो

वै सः" इति पुच्छब्रह्मणो निरतिशयानन्दस्वरूपत्वं प्रतिज्ञाय, आनन्दमय-तद्विषयानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितं ब्रह्मानन्दलेशं लब्ध्वा निर्वृतो भवतीति शास्ति । एवम् आनन्दमयपरामर्शस्य निरतिशयानन्दरूपपुच्छब्रह्म-प्रतिपत्तिशेषत्वं क्लृप्तमिति आनन्दमयवाक्येऽपि तदुपन्यासस्य पुच्छ-ब्रह्मप्रतिपत्तिशेषत्वमेव युक्तम्, न तूपासनाविधानार्थत्वम् इति सूत्रस्याशयः । एवं तत्तदाशङ्कानिराकरणपूर्वकं सूत्रव्याख्याने, सिद्धान्तस्थापने च श्रीमता अप्पय्यदीक्षितेन प्रदर्शिता प्रतिभा प्रतिवादिनोऽपि विस्मापयति ।

अपशूद्राधिकरणस्यान्ते भगवत्पादैः सूचितम् इतिहासपुराणादिद्वारा द्विजेतराणां ब्रह्मविद्याधिकारं विशदीकृत्य, अप्पय्यदीक्षितः – "किञ्च शूद्रस्य क्वचित् क्वचिदस्त्येवेतिहासपुराणप्रतिपाद्यायां सगुणविद्यायामप्य-धिकारो यत्र विशिष्य विधानं लिङ्गं नास्ति, यथा प्रणवरहितेन पञ्चाक्षरेण शिवोपासनायाम्, यथा वा नारदस्य प्राचीने शूद्रजन्मनि यतिभि-रुपदिष्टायामच्युतोपासनायाम् । एवं शैवपाशुपतपाञ्चरात्रादिदृष्टेषु सगुण-विद्याविशेषेष्वपि शूद्रोचितसंस्कारपूर्वकं विशिष्य विहितेषु तस्याधिकारो द्रष्टव्यः" इत्यादिना सगुणविद्यास्वपि आगमादिद्वारा द्विजेतराणामधिकारं प्रत्यपादयत् ।

प्रसिद्धालङ्कारिकः अप्पय्यदीक्षितः कस्यचिद्विषयस्य निर्णयावसरे काव्य-वाक्यान्यपि बहूनि उदाजहार । अनुकृत्यधिकरणस्य विषयभूते "ईशानो भूतभव्यस्य" इति वाक्ये ईशानशब्दो रूढ्या परमेश्वरमभिधातुं नेष्टे; यतः प्रतिसम्बन्धिनो भूतभव्यस्य उपादानात्, अत्र यौगिकार्थस्यैव ग्राह्यत्वात् । यथा "पद्मानि यस्याग्रसरोरुहाणि" इति वाक्ये सरःप्रतिसम्बन्धिनः 'अग्रस्य' उपादानात् सरोरुहशब्दो रूढिं जहाति, यौगिकमेव चार्थं प्रतिपादयति, अत एव च पुनः 'पद्म'शब्दप्रयोग इति पूर्वपक्षम् अन्यस्य श्लोकस्योदाहरणेन प्रतिक्षिपति यौगिकार्थप्रतिसम्बन्ध्यनुपादान एव रूढ्युन्मेष इति न नियमः, तत्प्रतिसम्बन्ध्युपादानेऽपि रूढशब्दश्रवणप्रयुक्त-रूढ्युन्मेषस्यानिवार्यत्वात्, काव्येषु तु व्यङ्ग्यार्थप्रधानेषु यस्य शब्दस्य यौगिकार्थो व्यञ्जनाव्यापारानुकूलस्तं शब्दं यौगिकार्थ एवोपक्षीणं कृत्वा तदीयरूढ्यर्थसमर्पणार्थं क्वचित् क्वचित् पदान्तरमुपाददत इति तत्

पदान्तरोपादानं न यौगिकार्थप्रतिसम्बन्ध्युपादानस्य रूढ्युन्मेषविरोधित्व-प्रयुक्तम्। तदनुपादानेऽपि–

**"तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।**
**कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये"॥**

(कु. स. ३।१०)

इत्यत्र तद्दर्शनात्। अत्र हि कैमुतिकन्यायोपयोगिसारतरायुधत्वव्यञ्जनानुकूले यौगिकार्थ एव पिनाकपाणिशब्दमुपक्षीणं कृत्वा तद्रूढिविषयशिव-समर्पणार्थपदान्तरं प्रयुक्तम्। एवमिहापि हिमवदौन्नत्यव्यञ्जनानुकूल-यौगिकार्थसमर्पणव्यग्रं सरोरुहपदमिति तद्रूढ्यर्थबोधनाय पद्मपदं प्रयुक्तम्।

किञ्च यस्य योगरूढिमतः पदस्य सन्निधौ तदलभ्यस्य कस्यचिदव-यवार्थस्य विशेषकं किमपि प्रथममुपादीयते यथा– "पद्मानि यस्याग्र-सरोरुहाणि" इति, यथा वा "लपनं पद्ममेवास्या लावण्यसरसीरुहम्" इति, तत् पदं तद्विशेषितयौगिकार्थवशीकृतमिति तेनापि हेतुना तत्र रुढ्युन्मेषो न भवतीति वक्तुं शक्यम्" इति प्रतिपाद्य अत्र तु ईशानपदार्थसङ्कोचकस्य पदस्य कस्यापि प्रथमतोऽनुपादानाद् रूढ्यर्थस्यैव ग्रहणम् इति सिद्धान्ती-चकार।

असम्भावितगुणवैकल्येन कश्चिन्निन्द्यमानोऽपि शोकं न व्रजति, "आकाशमयं खादितुं न शक्तः" इति परेण कृतां निन्दां श्रुत्वा यदि कश्चित् शोकाक्रान्तो भवति तदासौ–

**"एतत्तस्य मुखात् कियत् कमलिनीपत्रे कणं पाथसो**
**यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि।**
**अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः**
**कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा"॥**

इति श्लोके वर्णितं मूढमनुकुर्याद् इति वदति अपशूद्राधिकरणे, सूर्येऽप्य-सम्भावितस्य ज्योतिषो जानश्रुतावभावस्य कथनं तस्य निन्दैव न भवतीति कथनप्रसङ्गे।

इति वाक्यस्य श्रवणेन तेषां तेषां मनसि सञ्जातस्यार्थज्ञानस्य व्यञ्जनावृत्ति-जन्यत्वोक्तिरप्येतादृश्येव । पूर्वोक्तभावपरम्पराया अपि वक्तृबोद्धव्यविशेष-जन्यत्वमस्त्येव ।

अत एव मीमांसकादिशास्त्रपरिहासपूर्वकमभिनवगुप्तेन दत्तहस्तावलम्बोऽपि आनन्दवर्धनेन स्थापितोऽयं ध्वनिसिद्धान्तः पश्चात्तनैः बहुभिरालङ्कारिकमूर्धन्यैरुपेक्षितः । सिद्धान्तमिमं खण्डयता महिमभट्टेन **व्यक्तिविवेक**नामा कश्चिद् ग्रन्थ एव निर्मितः, कुन्तकोऽपि वक्रोक्तेरतीव-व्यापकप्रवृत्तितामुपपादयन् ध्वनिभेदान् सर्वान् वक्रोक्तावेवान्तर्भावयितुं प्रावर्तत, धनञ्जयधनिकभोजादयोऽपि नैवात्र श्रद्धालवोऽभूवन् ।

बहुषु स्थानेषु वाच्यार्थादतिरिक्ततया प्रतीयमानोऽप्यर्थः कश्चिदस्तीति नेदमविदितं प्राचामालङ्कारिकाणाम्, पर्यायोक्त-समासोक्ति-अप्रस्तुतप्रशंसा-व्याजस्तुत्यादिषु तत्सत्तां तत्तदलङ्कारलक्षणोदाहरणादिभिः स्पष्टीकुर्वताम् । प्रसङ्गवशेनानन्दवर्धनेनाप्ययं विषयः प्रतिपादितः; परन्तु प्राञ्च आलङ्कारिकाः प्रतीयमानस्यास्यार्थस्य ध्वनिरिति नाम नैव चक्रुः, नापि वायं काव्यात्मेति उज्जुघुषुः । 'गम्यार्थः', 'प्रतीयमानार्थः' इत्यादिभिरेवायं निरदिश्यत तैः । सोऽयं प्रतीयमानोऽर्थोऽपि शब्दैः सुदूरप्रसारिण्या शक्त्यैव बोध्यत इति तेषामाशयः । शब्दा अभिधया अर्थान् बोधयन्ति । तत्साहाय्येनैव यावानर्थो बुबोधयिषितो वक्ता तं समधिगच्छन्ति श्रोतार इति ते अभिप्रयन्ति । अत एवाह भट्टोद्भटः **काव्यालङ्कारसारसङ्ग्रहे** व्याजस्तुति-प्रकरणे –

**"शब्दशक्तिस्वभावेन यत्र निन्देव गम्यते ।**
**वस्तुतस्तु स्तुतिः श्रेष्ठा व्याजस्तुतिरसौ मता"** ॥ इति ।

तद्व्याख्यायां चेन्दुराजेनैवं प्रत्यपादि– "यत्र शब्दानाम् अभिधायकानां या शक्तिः अर्थप्रत्यायनौन्मुख्यं तस्या यः स्वभावो नियतार्थनिष्ठ-त्वात्मकस्तेन निन्दा गम्यत इव । न त्वसौ निन्दैव, पदार्थपर्यालोचन-सामर्थ्योत्थायां स्तुतौ वाक्यार्थीभूतायामवान्तरवाक्यार्थत्वात्" इति वाक्यश्रवणसमनन्तरं निन्दैव स्फुरति; परन्तु पदार्थपर्यालोचनायां तस्मादनुपपन्नत्वात् स्तुतिर्गम्यते, यतस्तात्पर्यविषयत्वात् स्तुतिरेवेति वाक्यार्थः ।

तत्र च निन्दा अवान्तरवाक्यार्थ इति भावः । अत्र पदार्थपर्यालोचन-सामर्थ्यमित्यस्य तात्पर्यज्ञानमित्यर्थः, शब्दानामर्थप्रत्यायनौन्मुख्यं तावत्पर्यन्तं प्रसरतीति भावः ।

अनेन च वाक्यार्थनिर्णये तात्पर्यस्य प्राधान्यं स्पष्टीभवति । एषामियं रीतिः – "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः" इत्येतत्सदृश इति प्रतिभाति, अतस्तात्पर्यादिसहकृतया अभिधयैव सर्वेऽप्यर्था बोध्यन्त इति वक्तुं शक्यते । लक्षणास्थलेऽपि तात्पर्यस्य प्राधान्यं प्रसिद्धमेव । अत एवासौ तात्पर्यानुपपत्तिमूलेत्युच्यते । 'गङ्गायां घोषः' इत्यत्र हि वक्तुर्विवक्षा-मनुरुध्य गङ्गाशब्दो गङ्गातीरं लक्षयतीत्युच्यते । यदि तस्य विवक्षा अन्यथा भवति तदा घोषशब्दस्यैव लक्षणया तिमिङ्गिल इति वा प्लवसंघात इति वा अर्थो वक्तव्यः स्यात् ।

तात्पर्यस्यापि न स्वतन्त्रतया वृत्तित्वमावश्यकम्, वक्तृगता विवक्षैव हि वाक्ये तात्पर्यमित्यभिधीयते, यदाहुः शङ्करभगवत्पादाः –**"विवक्षित-गुणोपपत्तेश्च"** (ब्र. सू. १।२।२) इति ब्रह्मसूत्रस्य भाष्ये– "वक्तुमिष्टा विवक्षिताः । यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः सम्भवति, तथाप्यु-पादानेन फलेनोपचर्यते । लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्वि-वक्षितमित्युच्यते । यदनुपादेयं तदविवक्षितमिति, तद्वद्वेदेऽप्युपादेयत्वेना-भिहितं विवक्षितं भवति, इतरदविवक्षितम्, उपादानानुपादाने तु वेदवाक्य-तात्पर्यातात्पर्याभ्यामवगम्येते" इति ।

"तृणान्यङ्कुरयामास विपक्षनृपसद्मसु" इत्यादिषु योऽयमन्योऽर्थः प्रतीयते तत्र कस्यचिद् हेतुहेतुमद्भावस्य ज्ञानमुपकरोति । केषुचिद् अनुमानमपि, काव्यगतस्यास्य दुष्टहेतुजन्यत्वमपि भूषणमेव न दूषणम्, काव्यगतत्वादेव । न ह्यत्र कस्यचिद् ज्ञानस्य प्रामाण्यम् अप्रामाण्यं वा सिषाधयिषितम्, अनुमानालङ्कारे यादृशमनुमानत्वं तादृशेनैवालमत्रापि । तत्र साध्यसाधनभावादेः कविप्रतिभामात्रकल्पितत्वात् । वाच्यार्थज्ञानानन्तरं श्रोतुर्मनसि नैके भावा उत्पद्येयुः, कस्य मनसि को भाव उत्पद्यत इति अभ्यूहितुमपि न शक्यते, अङ्गीकृतमेव हि ध्वनिवादिभिः "वक्तृबोद्धव्य-काकूनाम्" (का. प्र. ३।२ ) इत्यादि । कार्यकारणभावप्रदर्शनेन तेषां

भावानां समर्थनं दुःशकमेव, तेषु केषाञ्चिद्व्यङ्ग्यार्थत्वमभ्युपगम्य व्यञ्जनाव्यापारेण ते बोध्यन्त इत्युक्तिमात्रेण न हि ते उपपादिता भवन्ति। युक्तमिदमतः प्रतिभाति यद् अभिधैकैव शब्दवृत्तिः, लक्षणावृत्तेर्वृत्तिता लाक्षणिक्येव, व्यङ्ग्यार्थतया अभिमन्यमानानां सर्वेषामप्यर्थानां वाच्यार्थ एव मूलं चेति। सर्वथा पुनःपरिशीलनीयोऽयं ध्वनिसिद्धान्तः परित्यक्ताभिमानैस्तत्त्वबुभुत्सुभिः।

"किमेतावता ध्वनेर्न किमपि प्राधान्यं काव्ये ?" इति प्रश्न उदेति। काव्ये प्रतीयमानार्थस्य वैशिष्ट्यं न केनाप्यपोहितुं शक्यते। न केवलं काव्ये, लोकव्यवहारेऽपि वाच्यार्थमात्रबोधकपदानां प्रयोगात् तदतिरिक्तार्थबोधकानां पदानां प्रयोगोऽधिकं चमत्कारजनक इत्यत्र न कस्यापि विप्रतिपत्तिः। व्यञ्जनाख्यायाः स्वतन्त्रायाः शब्दवृत्तेरङ्गीकार एवास्माकं विप्रतिपत्तिः। आनन्दवर्धनेन सोदाहरणं प्रतिपादिताः प्रतीयमानार्थभेदास्तस्य सहृदयशिरोमणितां स्पष्टीकुर्वन्ति, अन्येषां च (कुन्तकक्षेमेन्द्रादीनाम्) भवन्ति पथप्रदर्शकाः। ते सर्वेऽपि वाच्यार्थसन्निवेशविशेषभूतार्थालङ्कारवत् प्रतीयमानार्थसन्निवेशविशेषा एव, प्रतीयमानास्ते सर्वेऽप्यर्थाः श्रोतृणां भावनाविशेषाद् वाच्यार्थज्ञानानन्तरबोध्या एवेति व्यञ्जनायाः पृथग्वृत्तिताङ्गीकारो नैवावश्यक इत्येव वयं वदामः। व्यञ्जकत्वमर्थ एव दृश्यते न शब्दे, यदि यत्र क्वचिद्वा दृश्यते तत् 'धिक्', 'हा', 'हन्त' इत्यादिपदगतव्यञ्जकतासदृशमेव। काव्यप्रकाशे नवमोल्लासे श्लेषप्रकरणे– "शब्दश्लेष इति चोच्यते अर्थालङ्कारमध्ये च लक्ष्यत इति कोऽयं नयः ?" इति पृच्छति मम्मटः। "व्यञ्जकता वाच्यलक्ष्यव्यङ्ग्यार्थगता, कामिनीकटाक्षादिगतेति चोच्यते, व्यञ्जनायाश्च शब्दवृत्तिता अङ्गीक्रियत इति कोऽयं नयः" इति वयमपि तं प्रष्टुं शक्नुमः।

आनन्दवर्धनेनैव नैके ध्वनिभेदाः प्रकल्पिताः। तेषामपर्याप्ततामिव मन्वानैः पश्चात्तनैरालङ्कारिकैस्तत्तद्भेदसंसृष्टिसङ्करादिकृतानि नैकसहस्राणि भेदानां परिगणितानि येषामुदाहरणान्यभ्यूहितुमपि न शक्यन्ते। सहृदयहृदयोद्वेजकतामात्रप्रयोजनानेतानुपेक्ष्य पण्डितराजेन षड्विंशतिरेव भेदाः प्रतिपादिताः।

यदा कश्चित्सिद्धान्तः प्रचुरं प्रचारमधिगच्छति तदा अनेके अस्थानेऽपि तं प्रसञ्जयन्त आत्मनो वैदुष्यं प्रकटीचिकीर्षन्ति । इदमेव संवृत्तं ध्वनिसिद्धान्तविषयेऽपि । अनेके काव्यनाटकादीनां व्याख्यातारः "अत्रास्य पदस्य प्रयोगाद् इदं ध्वन्यते", "तत्र तस्य प्रयोगात् तद्ध्वन्यते" इत्यादि किञ्चिल्लिखन्तः स्वमनोगतान् भावान् सर्वानपि तत्र समारोप्य गभीरार्थाविष्कृतिचातुर्यमात्मनः प्रकटयन्ति, विशेषतश्च तत्तत्काव्यानां नाटकादीनां च प्रारम्भे । एतादृशमाकाशचित्रनिर्माणं न केवलमस्मदीयेषु आलङ्कारिकेषु, पाश्चात्त्येषु साहित्यविमर्शकेषु, तदनुसारिषु आधुनिकभारतीयसाहित्यविमर्शकेष्वपि दृश्यते । अत एव सपरिहासमुच्यते– "षेक्स्पियरः किल स्वीयरूपकसम्बद्धायां कस्याञ्चित् परीक्षायाम् उत्तीर्णतां न लेभे, यतो रूपकाणि तान्यधिकृत्य ब्राड्लेनाम्ना विमर्शकाग्रण्या विरचिता ग्रन्था न पठिताः" इति । व्याख्यातृभिरारोप्यमाणा एते अर्थाः कविना स्वप्नेऽपि न सम्भाविता इति तु निर्विवादम् ।

तदयमत्र संपिण्डितार्थः । प्रतीयमानस्यार्थस्यास्तित्वे न कस्यापि विप्रतिपत्तिः । वाच्यार्थात् स एव नितरां चमत्कारकारी इति काव्येषु तस्य प्राधान्यमूरीकर्तव्यम्; परन्तु प्रतीयमानस्यास्यार्थस्य ज्ञानं वाच्यार्थज्ञानानन्तरमेव भवति, न पुनस्तज्ज्ञानं विना । अतः पृथग् व्यञ्जनायाः शब्दवृत्तिता नाङ्गीकर्तव्या । यदा एकः शब्दः प्रयुज्यते तदा स केवलं मुख्यमेवार्थमभिधत्ते, लाक्षणिकं वा व्यङ्ग्यं वार्थं न बोधयति । निरूढलक्षणाभिन्नेषु, सर्वेषु च व्यञ्जनास्थलेषु शब्दान्तरसन्निधिः आवश्यकी । अतोऽपि व्यञ्जनाया न शब्दवृत्तित्वम् । शब्दार्थभिन्नेषु चेष्टादिष्वपि व्यञ्जनाङ्गीक्रियते, अतोऽपि नास्याः शब्दवृत्तित्वम् । सर्वत्रापि ध्वनेर्गवेषणम्, तेन च रमणीयतारोपणं सहृदयहृदयोद्वेजकम् । गुणालङ्कारशय्यपाकादीन् पृष्ठतः कृत्वा "सूर्यः अस्तं गच्छति" इत्यादिषु वाक्येष्वपि– "अयमर्थो ध्वन्यते", "एषोऽर्थः प्रतीयते" इति कथनमात्रेण कथं वा तत्र सौन्दर्यं सम्पाद्येत ? "अयं रात्रौ जानुनी आश्लिष्य, दिवा आतपे स्थित्वा, संध्ययोश्च वह्नेः समीपे उपविश्य शीतं गमयति" इत्युक्ते "अयं गृहवसनादिहीनो दरिद्रः" इति वस्तुनो वा, दैन्यविषाददिभावानां वा

ध्वनिरस्तीति कथनमात्रेण किमत्र रमणीयता अनुभूयेत ? यदि स एवार्थः –

**"रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।**
**एवं शीतं मया नीतं जानुभानुकृशानुभिः" ॥**

इत्युपस्थाप्यते पदगुम्फनासौन्दर्येण, अनुप्रासेन, वृत्ते निबन्धनेन च (वृत्तमपि शब्दालङ्कार इति महिमभट्टः) चमत्कारजनकतास्तीति वक्तुं शक्यते । गुणालङ्कारादीन् विस्मृत्य ध्वनिर्ध्वनिरिति घोषणं निरर्थकम्, अतश्चाभिधयाऽवगतो मुख्यार्थ एव उत्तरङ्गयति विविधान् भावान् सहृदयहृदयेषु तत्तत्पदविशेषप्रकरणादिसाहचर्यादित्यभ्युपगम एव श्रेयान् ।

**तत्तद्ग्रन्थार्थमननैर्येऽर्था मे प्रास्फुटन् हृदि ।**
**समुपस्थापितास्तेऽत्र परीक्षायै विपश्चिताम् ॥**

उक्तं हि आचार्येण अभिनवगुप्तेन–

**ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं**
**धीः पश्यति श्रान्तिमवेदयन्ती ।**
**फलं तदाद्यैः परिकल्पितानां**
**विवेकसोपानपरम्पराणाम्** ॥ इति ।



## कालिदासस्य पुनःपुनरुक्तयः

प्रायो महाप्रमाणं काव्यं काव्यजालं वा निबध्नन् कविः स्वाभिमतान् भावान्, वाक्यानि, वाक्यांशान्, पदानि वा तत्र तत्र पुनःपुनरावर्तयतीति विदितचरमेवेदं प्रेक्षावताम् । वाल्मीकिव्यासादयश्चात्रोदाहरणम् । नैकेषां काव्यानां निर्मातरि कालिदासेऽपीयं प्रवृत्तिर्दृश्यते । रघुवंश-कुमारसम्भव-मेघदूताख्यानि त्रीणि श्रव्यकाव्यानि मालविकाग्निमित्र-विक्रमोर्वशीयाभि-ज्ञानशाकुन्तलाख्यानि रूपकाणि च कालिदासस्य कृतिरिति बहवो विद्वांस आशेरते । तेषु तत्र तत्रोपलभ्यमानानां केषाञ्चिद् भाव-वाक्य-वाक्यांश-पदादीनां पौनःपुन्यमत्र प्रस्तूयते ।

1. सत्यपि महत्यवरोधे दिलीपः सुदक्षिणया,राज्यलक्ष्म्या च द्वाभ्यामेव किल आत्मानं कलत्रवन्तममंस्त–

> **"कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
> **तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः"** ॥ (रघु. १।३२)

दुष्यन्तोऽप्येतादृशमेव भावमाविष्करोति–

> **"परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।**
> **समुद्ररसना चोर्वी सखी च युवयोरियम्"** ॥ (अ. शा. ३।१८)

अस्यैव प्रतिध्वनिः श्रूयते परिव्राजिकाया आशिषि अग्निमित्राय प्रयुक्ते–

> **"महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।**
> **धारिणी भूतधारिण्योर्भव भर्ता शरच्छतम्"** ॥ (मा. १।१५ )

2. दिलीपः सुदक्षिणा च किल मृगद्वन्द्वेषु परस्पराक्षिसादृश्यमद्राष्टाम् । पार्वती च मृगनयनयोः पार्श्वे आत्मनो नयने निधाय अमिमीत ।

हरिणाः पार्वत्या नयनाभ्यां चञ्चलैरात्मनो नयनैः सादृश्यमिव प्रयुञ्जत इति वदति कुहनावटुः –

**"परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु"**॥ (रघु. १।४० )
**"अरण्यबीजाञ्जलिदानलालिता-**
**स्तथा च तस्यां हरिणा विशश्वसुः ।**
**यथा तदीयैर्नयनैः कुतूहलात्**
**पुरः सखीनाममिमीत लोचने"** ॥ (कु. स. ५।१५)
**"अपि प्रसन्नं हरिणेषु ते मनः**
**कटस्थदर्भप्रणयापहारिषु ।**
**य उत्पलाक्षिप्रचलैर्विलोचनै-**
**स्तवाक्षिसादृश्यमिव प्रयुञ्जते"** ॥ (कु. स. ५।३५ )

3. दिलीपो राज्याश्रमे वसन् मुनिरासीत् । दुष्यन्तोऽपि सर्वभोग्ये आश्रमे (राज्याश्रमे) वसन् प्रजानां पालनं तपः समचिनोत् ।

**"तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः"** ॥ (रघु. १।५८ )
**"अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।**
**अस्यापि द्यां विशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः"** ॥
(अ. शा. २।१४)

4. **"पिण्डविच्छेददर्शिनः पितरो मया दत्तं पिण्डं नैव सम्यक् भुञ्जते । मया दत्तं च जलं निःश्वासैः कवोष्णं कृत्वा पिबन्ति"** इत्यशोचत् पुत्रहीनो दिलीपः –

**"नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।**
**न प्रकामभुजः श्राद्धे स्वधासङ्ग्रहतत्पराः"** ॥

**"मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।**
**पयःपूर्वैः सनिःश्वासैः कवोष्णमुपभुज्यते" ॥**
(रघु. १।६६-६७)

दुष्यन्तोऽप्येतादृशेनैव शोकेन व्याकुलोऽभूत्–

**"अस्मात् परं बत यथाविधिसंभृतानि**
**को नः कुले निवपनानि करिष्यतीति ।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**धौताश्रुशेषमुदकं पितरः पिबन्ति" ॥**
(अ. शा. ६।२५)

5. दिलीपो नन्दिन्याः सेवाविषये गुरोरुपदेशमक्षरशोऽनुससार–

**"प्रस्थितायां प्रतिष्ठेयाः स्थितायां स्थितिमाचरेः ।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः" ॥**
(रघु. १।८९)

**"स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।**
**जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्" ॥**
(रघु. २।६)

6. वसिष्ठस्याश्रमाद् वनं गच्छन्ती दिलीपेनानुसृता नन्दिनी विधिनोपपन्ना श्रद्धेव किल बभौ–

**"बभौ च सा तेन सतां मतेन**
**श्रद्धेव साक्षाद्विधिनोपपन्ना" ॥** (रघु. २।१६)

दुष्यन्तस्य भार्यापुत्राभ्यां समागमे एतादृशमेवौचित्यमपश्यद् मारीचः –

**"दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।**
**श्रद्धा वित्तं विधिश्चेति त्रितयं वः समागतम्" ॥** (अ.शा. ७।९)

7. दिलीपः किलान्तर्वत्नीं सुदक्षिणाम् अग्निगर्भां शमीममन्यत । अन्तर्वत्नीं शकुन्तलामप्येवमेव वर्णयति स्म आकाशवाणी–

**"निधानगर्भामिव सागराम्बरां**
**शमीमिवाभ्यन्तरलीनपावकाम् ।**
**नदीमिवान्तःसलिलां सरस्वतीं**
**नृपः ससत्त्वां महिषीममन्यत" ॥** (रघु. ४।९)

**"दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।**
**अवेहि तनयां राजन्नग्निगर्भां शमीमिव" ॥** (अ. शा. ४।४)

8. प्रायः कालिदासः सदपत्यौ उत्तमौ दम्पती जयन्तसहिताभ्यां शचीपुरन्दराभ्यामुपमिमीते–

**"उमावृषाङ्कौ शरजन्मना यथा**
**यथा जयन्तेन शचीपुरन्दरौ ।**
**तथा नृपः सा च सुतेन मागधी**
**ननन्दतुस्तत्सदृशेन तत्समौ" ॥** (रघु. ३।२३)

**"आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।**
**आशीरन्या न ते योग्या पौलोमीसदृशी भव" ॥**
(अ. शा. ७।२८)

**"अद्याहं पुत्रिणामग्र्य सत्पुत्रेणामुना तव ।**
**पौलोमीसंभवेनेव जयन्तेन पुरन्दरः" ॥** (विक्र. ५।१४)

9. सत्पात्रोपहिता विद्या नितरां शोभते–

**"अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।**
**अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति" ॥**
(रघु. ३।२९)

**"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।**
**जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य" ॥** (माल. १।६)

10. ईश्वर-महेश्वरशब्दौ केवलं महादेवमेव विषयीकुरुतः,नान्यम्–

**"महेश्वरस्त्र्यम्बक एव नापरः" ।** (रघु. ३।२९)

**"अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।**
**शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः" ॥** (कु. स. ६।३)

**"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी ।**
**यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः" ॥** (विक्र. १।१)

11. सूर्यो मेघश्च सहस्रगुणम् उत्स्रष्टुमेव जलम् आददाते । दिलीपादयो राजानोऽपि प्रजाभ्यो बहुधा उपकर्तुमेव ताभ्यः करं गृह्णन्ति स्म–

**"प्रजानामेव भूत्यर्थं स ताभ्यो ब  हीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः"** ॥ (रघु. १।१८)

12. प्रायः षट्पदाः पुष्पितेन सहकारेण नितराम् आकृष्टास्तं हातुं नोत्सहन्ते । तथैव इन्दुमती अजेनाकृष्टं चेतः पुनः समाहर्तुं न शशाक । तथा हिमवतोऽपि चेतो दुहितरि नितरां स्निग्धम् आसीत्–

**"न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली"** ।

(रघु. ६।६९)

**"अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा"** । (कु.स.१। २७)

13. प्रतिराजकुमारम् इन्दुमतीं नीत्वा तान् राजकुमारान् वर्णयन्ती सुनन्दा इन्दुमत्या मनः अजे लग्नं ज्ञात्वा यदा उत्स्मयन्ती "किमन्यं राजकुमारं गमिष्यामः ?" इत्यवदत् तदा इन्दुमती किल असूयाकुटिलमपश्यत्–

**"तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।**
**आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श"** ॥

(रघु. ६।८२)

अभिज्ञानशाकुन्तले दुष्यन्तलग्नमनसं शकुन्तलां यदा सखी प्रियंवदा– **"त्वमद्य अस्मात् स्थानाद् यथेष्टं गन्तुमर्हसि"** इत्यवोचत् तदासौ सकृतककोपं प्रत्यवदत्–

**"का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा"** । इति ।

(अ.शा. १)

14.लौकिकेषु विनोदेषु वैदिकेषु विवाहसंस्कारादिषु च कालिदासस्य सुमहती श्रद्धा दृश्यते । अत एवायं रघुवंश-कुमारसम्भवयोर्यत्र अजस्य इन्दुमत्या परमेश्वरस्य च उमया विवाहो वर्णितः, एकरूपानेव श्लोकान् बहून् उपनिबबन्ध । वध्वा साकं विदर्भराजस्य प्रासादं प्रति रथ्यायां

गच्छन्तम् अजं किल द्रष्टुं पौरपुरन्ध्र्यः कौतुकेन गवाक्षादिस्थानानि जग्मुः। तरुणीस्ता वर्णयन्तः श्लोका यथातथं कुमारसम्भवेऽपि दृश्यन्ते। भगवतश्चन्द्रमौलेरुमया साकम् ओषधिप्रस्थप्रवेशावर्णने–

**"ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु।**
**बभूवुरित्थं सुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि" ॥**
(रघु. ७।५)

**"तस्मिन् मुहूर्ते पुरसुन्दरीणाम्**
**ईशानसन्दर्शनलालसानाम्।**
**प्रासादमालासु बभूवुरित्थं**
**त्यक्तान्यकार्याणि विचेष्टितानि" ॥** (कु. स. ७।५६)

**"आलोकमार्गं.........केशपाशः" ॥**
(रघु. ७।६, कु. स. ७।५७)

**"प्रसाधिकालम्बितमग्रपादं ... ततान" ॥**
(रघु. ७।७, कु. स. ७।५८)

**"विलोनं दक्षिणमञ्जनेन ... वहन्ती" ॥**
(रघु. ७।८, कु. स. ७।५९)

**"अर्धाचिता सत्वरमुत्थितायाः .......सूत्रशेषा" ॥**
(रघु. ७।८, कु. स. ७।६१)

**"तासां मुखैरासवगन्धगर्भै ....... इवासन्" ॥**
(रघु. ७।११, कु. स. ७।६२)

**"तं राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि।**
**तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा" ॥**
(रघु. ७।१२)

**"तमेकदृश्यं नयनैः पिबन्त्यो"** अन्यत् पूर्ववत्।
(कु. स. ७।६४)

**"परस्परेण स्पृहणीयशोभं....वितथोऽभविष्यत्" ॥**
(रघु. ७।१४, कु. स. ७।६६)

इत्युद्गताः पौरवधूमुखेभ्यः
श्रृण्वन् कथाः श्रोत्रसुखाः कुमारः ।
उद्भासितं मङ्गलसंविधाभिः
सम्बन्धिनः सद्म समाससाद" ॥ (रघु. ७।१६)

"इत्योषधिप्रस्थविलासिनीनां
श्रृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद" ॥ (कु.स.७।६९)

"ततोऽवतीर्याशु करेणुकायाः
स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश
नारीमनांसीव चतुष्कमन्तः" ॥ (रघु. ७।१७)

"तत्रावतीर्याच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश" ॥
(कु. स. ७।७०)

"महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।
भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः" ।
(रघु. ७।१८)

"तत्रेश्वरो विष्टरभाग्यथावत् सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं प्रत्यग्रहीत्सर्वमतन्त्रवर्जम्" ॥
(कु. स. ७।७२)

दुकूलं वसानः अजः । ईश्वरोऽवरोधरक्षैर्वध्वाः समीपं निन्ये–

"दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः" ॥
(रघु. ७।१९, कु. स. ७।७३)

केवलं नामधेयादीन्येव यथोचितं परिवर्तयन् कविः सात्त्विकभावानां वर्णनमपि एकधैवाकार्षीद् द्वयोरपि काव्ययोः –

"आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
तस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन" ॥
(रघु. ७ ।२२)

**"रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य" ॥**

(कु. स.७।७७)

**"तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।**
**ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि" ॥**

(रघु. ७।२३)

**"तयोः समापत्तिषु कातराणि किञ्चिद् व्यवस्थापितसंहृतानि ।**
**ह्रीयन्त्रणां तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि" ॥**

(कु . स. ७।७५)

वधूवरयोः प्रदक्षिणप्रक्रमणं वर्णयन् श्लोक उभयोरपि काव्ययोरेकविध एव संदृब्धः –

**"प्रदक्षिणप्रक्रमणात् कृशानोः....अहस्त्रियामम्" ।**

(रघु. ७।२४, कु. स. ७।७९)

लाजहोमान्ते धूमं जिघ्रत्या वध्वाः कर्णोपान्ते स धूमः किल नीलोत्पलवत् चकाशे–

**"हविः शमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।**
**कपोलसंस्पर्शिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे" ॥**

(रघु. ७।२६)

**"सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।**
**कपोलसंस्पर्शिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे" ॥**

(कु. स. ७।८१)

**"तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।**
**वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद् बभूव" ॥** (रघु. ७।२७)

**"तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।**
**वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद् बभूव" ॥**

(कु. स. ७।८२)

विवाहस्यान्ते समागता वृद्धा आशीःपूर्वकं वधूवरयोः शिरसोः आर्द्रानक्षतान् (तण्डुलान्) किल प्रचिक्षिपुः –

**"तौ स्नातकैर्बन्धुमता च राज्ञा पुरन्ध्रिभिश्च क्रमशः प्रयुक्तम् ।**
**कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम्" ॥**

(रघु. ७।२८)

"क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात् कनकासनस्थौ ।
जायापती लौकिकमेषणीयमार्द्राक्षतारोपणमन्वभूताम्" ॥

(कु. स. ७।८८)

15. शत्रूणां शिरांसि भल्लैर्निकृत्य अजेन कृतं भूमौ प्रास्तरणं तस्य पित्रा दिग्विजयसमये कृतं तादृशमेव कर्म स्मारयति–

"स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैर्हुङ्कारगर्भैर्द्विषतां शिरांसि" ॥ (रघु. ७।५८)

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव" ॥ (रघु. ७।६३)

16. लताभूरुहयोर्नायिकानायकत्वं नैकशो वर्णयति कालिदासः –

"मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम्" ॥(रघु. ८।६१)

"हला ! रमणीये खलु काले एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः" ।

(अ. शा. १)

17. शिवकेशवयोः सर्वथा अभेदम् अङ्गीकुर्वन् कालिदासस्तयोर्वर्णनम् एकयैव विधया तनोति–

"सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक्" ॥ (रघु. १०।२०)

"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः" ॥ (कु. स. २।९)

18. नवजातस्य शिशो रघोः किल कान्त्या दीपा विगततेजसोऽभूवन्–

"अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव" ॥

(रघु. ३।१५)

श्रीरामस्य जन्मसमयेऽपि तथैवाभवत्–

**"रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।**
**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन्" ॥**

(रघु. १०।६८)

19. सीताविरहपीडितः श्रीरामः सीतेति भ्रान्त्या लतां किल आलिङ्गितुमियेष–

**"इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् ।**
**त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः" ॥**

(रघु. १३।३२)

पुरूरवा अपि तथैव कर्तुमभिलाषामकरोत्–

**"यावदस्यां प्रियानुकारिण्यां परिष्वङ्गप्रणयी भवामि"** ।(विक्र. ४)

20. अपवादेन सामान्यशास्त्रमिव रिपुः स्वस्थानात् प्रच्याव्यत इति वर्णयति कालिदासः –

**"यः कश्चन रघूणां हि परमेकः परन्तपः ।**
**अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः"** ॥ (रघु. १५।७)
**"लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः"** ॥ (कु. स. २।२७)

21. शत्रुघ्नेन निर्मिता मधुरानगरी हिमवत ओषधिप्रस्थपुरी च किल स्वर्गाभिष्यन्दवमनेन निर्मिते इव किल आस्ताम्–

**"या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता"** ॥ (रघु. १५।२९)
**"अलकामतिवाह्येव वसतिं वसुसम्पदाम् ।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिताम्"** ॥ (कु. स. ६।३७)

22. प्रायः कालिदासो राज्ञो भुजदण्डौ नगरार्गलयोपमिमीते–

**"एकातपत्रं भुवनैकवीरः पुरार्गलादीर्घभुजो बुभोज"** ।

(रघु. १८।४)

"नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति" ॥ (अ.शा. २।१५)

23. पुंसः स्त्रिया वा यौवनं शरीरस्य स्वाभाविकोऽलङ्कारः, मन्मथस्य अस्त्रम्, अपूर्वं च मधु–

"अथ मधु वनितानां नेत्रनिर्वेशनीयं
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।
अकृतकविधिं सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे" ॥ (रघु. १८।५२)

"असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथ वयः प्रपेदे" ॥

(कु. स. १।३१)

24. कृतापराधस्य प्रियस्य दण्डने स्त्रियो मेखलमुपयुञ्जते–

"अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः" ॥

(रघु. १९।१७)

"स्मरसि स्मर मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम्" । (कु. स. ४।८)

"(इति इरावती रशनामादाय राजानं ताडयितुमिच्छति)" । (मा. ३)

25. दर्पणे परिभोगचिह्नानि पश्यन्तीः प्रिया अविज्ञातं पश्यन्तः पतयः लज्जाकुलाः कुर्वन्ति–

"दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः ।
छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार सः" ॥

(रघु. १९।२४)

"दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेक्ष्य बिम्बमुपबिम्बमात्मनः कानि कानि न चकार लज्जया" ॥

(कु. स. ८। ११)

26. सिंहे बाणं प्रयोक्तुमुद्यतहस्तो दिलीपस्तस्य प्रभावेण प्रतिहत-शक्तिः स्तब्धबाहुः चित्रलिखित इवावतस्थे–

**"सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे" ।**

(रघु. २।३१)

नन्दिनः शासनेन सर्वमपि वनं चित्रार्पितारम्भमिवाभवत्–

**"निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।**
**तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे" ॥**

(कु. स. ३।४२)

27. कदाचिद् मोहोऽपि स्मृत्युपलम्भाद्वरं यथा रघुवंशे सीतायाः कुमारसम्भवे च रतेः –

**"सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।**
**तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत् कष्टतरः प्रबोधः" ॥**

(रघु. १४।५६)

**"तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव" ॥**

(कु. स. ३।७३)

28. मृगयां सर्वथा राजभिः कर्तव्यं व्यायामं विनोदं च वर्णयति कालिदासः –

**"परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।**
**श्रमजयात् प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ" ॥**

(रघु. ९।४९)

**"मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।**
**उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले**
**मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः" ॥**

(अ. शा. २।५)

29. सहजसौन्दर्यशालि वस्तु सर्वथा सर्वदा सुन्दरमेव भवेत्–

**"यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।**
**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते" ॥**

(कु. स. ५।९)

**"सरसिजमनुविद्धं शैवलेनापि रम्यं**
**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।**
**इयमधिकमनोज्ञा वल्कलेनापि तन्वी**
**किमिव हि मधुराणां मण्डनं नाकृतीनाम्" ॥**

(अ.शा. १।१९)

30. द्वयोः सज्जनयोर्मध्ये मैत्री सप्तभिः पदैर्निर्वर्त्यते–

**"सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते" ।**

(रघु. १।५८)

**"यतः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते" ॥**

(कु. स. ५।३९)

31. वयसा वृद्धा अपि तापसास्तपस्यन्तीं पार्वतीं द्रष्टुं तस्या आश्रममगच्छन् । यतो धर्मेण वृद्धानां विषये वयो न समीक्ष्यते–

**"दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु नयः समीक्ष्यते" ।**

(कु. स. ५।१६)

एतत्सदृश एव भाव आविष्कृतस्तेजोवतां सद्वृत्तवतां च विषये कालिदासेन–

**"कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।**
**काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते" ॥**

(रघु. ११।१)

**"स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम्"** । (कु. स. ६।१२)

32. न कस्यापि आत्मनो गुणेषु प्रत्ययो भवेद् यावदेते महतां प्रशंसा-पात्रं न स्युः –

**"त्वत्संभावितमात्मानं बहुमन्यामहे वयम् ।**
**प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः" ॥**

(कु. स. ६।२०)

**"आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" ।**

(अ. शा. १।२)

33. प्रायो महतामनुग्रहोऽदृष्टमेधा वृष्टिरिव, अलक्षितकुसुमं फलमिव च अचिन्तितमेव लभ्यते–

**"अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।**
**अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे" ॥**

(कु. स. ६।५४ )

**"उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।**
**निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः" ॥**

(अ. शा. ७।३०)

34. पार्वती किल शिवं वशीकर्तुमशक्तमात्मनः सौन्दर्यं निनिन्द; यतः सौन्दर्यस्य फलं प्रियमनोहरणमेव–

**"तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।**
**निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता"॥**

(कु. स. ५।१)

एतादृश एव भावोऽस्मिन्नेव काव्ये सप्तमसर्गे आविष्कृतः कविना–

**"आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी।**
**हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः"॥**

(कु. स. ७।२२)

35. विरहव्यथाकुलं सुकुमारं हृदयं सुदृढ आशाबन्ध एव धारयति–

**"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां**
**सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि" ॥** (मेघ. १।९)

"एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति" ॥

(अ. शा. ४।१६)

36. भामिनीपादताडनमेवाशोकस्य कामिनश्च साधारणो दोहदः -

"रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नो कुरवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः" ॥

(मेघ. २।१८)

"नवकिसलयरागेणाग्रपादेन बाला
स्फुटितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम्" ॥ (मा. ३।१२)

"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान"॥

(कु. स. ७।१९)

37. महदेतत् प्रमोदस्थानं कामिनो यदात्मनः प्रेयस्या अपि तावान् अनुराग आत्मनि यावानस्य तस्याम् । तयोः समागमो भवतु वा मा वा, प्रेयसीप्रिययोस्तुल्यानुरागत्वमेव मानससंतृप्तिहेतुः । भावोऽयं बहुशः प्रकटीकृतः कालिदासेन-

"कामं प्रिया न सुलभा मनस्तु तद्भावभवनायासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" ॥

(अ. शा. २।१)

"अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति" ॥

(अ. शा. ३।४)

**"अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति ।**
**परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः" ॥**

(अ. शा. ३।१५)

38. मृगीदर्शनेन स्मारितप्रियानेत्रो बर्हिणदर्शनेन च स्मृतिपथोपनीत-प्रियाकेशपाशः किल दशरथो न शशाक तयोर्बाणान् मोक्तुम्–

**"तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः**
**कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः ।**
**त्रासातिमात्रचटुलैः स्मरयत्सु नेत्रैः**
**प्रौढप्रियानयनविभ्रमचेष्टितानि" ॥** (रघु. ९।५८)

**"अपि तुरगसमीपादुत्पतन्तं मयूरं**
**न स रुचिरकलापं बाणलक्ष्यीचकार ।**
**सपदि गतमनस्कः चित्रमाल्यानुकीर्णे**
**रतिविगलितबन्धे केशपाशे प्रियायाः" ॥** (रघु. ९।६७)

अयमेव भावोऽभिज्ञानशाकुन्तलेऽपि प्रकटितः कविना–

**"न नमयितुमधिज्यमस्मि शक्तो धनुरिदमाहितसायकं मृगेषु ।**
**सह वसतिमुपेत्य यैः प्रियायाः कृत इव मुग्धविलोकितोपदेशः" ॥**

(अ. शा. २।३)

39. श्रीरामेण विसृष्टां सीतां दृष्ट्वा पक्षिणः, मृगाः, वृक्षाश्चापि शोकार्ता अभवन्–

**"नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः ।**
**तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि" ॥**

(रघु. १४।६९)

एतादृश एव भाव आविष्कृतः कविना अभिज्ञानशाकुन्तलेऽपि–

**"उद्गलितदर्भकबला मृगाः परित्यक्तनर्तना मयूराः ।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः" ॥** (अ. शा.४।१२)

40. अग्नौ हुतानां हव्यानां गन्धानामाघ्राणेनैव सर्वे प्राणिनो दूता भवन्ति–

**"त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।**
**घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा" ॥**

(रघु. १३।३७)

**"अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु" ।**

(अ. शा. ४।८)

41. आकाशगङ्गागतानि पद्मानि सप्तर्षयः पूजार्थमवचिन्वन्ति–

**"अनाभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।**
**प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम्" ॥**

(रघु. १३।५१)

**"सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः ।**
**पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः" ॥**

(कु. स. १।१६)

42. रूपगुणादिभिरनुकूलयोर्वधूवरयोर्विवाहसम्पादनेनैव ब्रह्मा अविनिन्द्यो भवति –

**"परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत्" ॥**

(रघु. ७।१४, कु. स. ७।६६)

**"त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः शकुन्तला मूर्तिमतीव सत्क्रिया ।**
**समानयंस्तुल्यगुणं वधूवरं चिराय वाच्यं न गतः प्रजापतिः" ॥**

(अ. शा. ५।१५)

43. जितेन्द्रियाः परदारविमुखाः –

**"का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।**
**आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति" ॥**

(रघु. १६।८)

"कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः " ॥

(अ. शा. ५।२८)

44. तिर्यञ्चोऽनुरागं विविधाभी रीतिभिः प्रदर्शयन्ति । भ्रमरः कुसुमपात्रगतं मधु प्रियया साकमेव आस्वादयति । हरिणश्च शृङ्गेण प्रियां कण्डूयते, हरिणी च हरिणस्य शृङ्गेण आत्मानं कण्डूयते –

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डुयत कृष्णसारः" ॥

(कु. स. ३/३६)

ईदृश एव भाव आविष्कृतोऽभिज्ञानशाकुन्तले–

"एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति" ॥

(अ. शा. ६।१९)

"कार्या सैकतलीनहंसमिथुना स्त्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्" ॥

(अ. शा. ६।१७)

45. प्रियावियोगार्तः कामी मनोविनोदार्थं प्रियायाश्चित्रं लिखति; परन्तूद्गच्छद्भिरश्रुभिः स चित्रदर्शनानन्दमपि नानुभवितुं शक्नोति–

'त्वामालिख्य प्रणयाकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रै स्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः" ॥

(मेघ. २।६७)

"प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि" ॥ (अ.शा.६।२२)

"हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्वाष्पत्वं सखे न भविष्यति" ॥ (वि. २।१०)

46. प्रियया प्रियेण वा स्वप्ने समागमो विरहदशासु अन्यतमा दशा । अस्याश्च वर्णनं कालिदासो बहुधा करोति, पूर्वोदाहृतयोरपि श्लोकयोर्दशाया अस्या सूचनं वर्तते । अपराणि च कतिचिदुदाहरणानि–

"मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति" ॥
(मेघ. २।४९)

"त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागरुत्यकण्ठार्पितबाहुबन्धना" ॥
(कु. स. ५।५७)

47. भगवद्गीतासु भगवता कृतः –

"देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" ॥

इत्युपदेशः पुनः पुनः स्मार्यते कालिदासेन –

"दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम्" ॥ (रघु. १।२६)

"भवतु तव बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं भावयेथाः ।
गणशतपरिवर्तैरेवमन्योन्यकृत्यै-
र्नियतमुभयलोकानुग्रहश्लाघनीयैः" ॥ (अ. शा. ७।३४)

**"त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टमाचरेः ।**
**सूर्यः समेधयत्यग्निमग्निः सूर्यं च तेजसा"** ॥ (वि. ५।२०)

48. स्त्रीणां भर्तृषु अकुण्ठितोऽधिकार इति मनुते कालिदासः –

**"अनिमित्तमिन्दुवदने किमत्रभवतः पराङ्मुखीभवसि ।**
**प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः"** ॥
(मा. १।१८)

**"कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम् ।**
**प्रभुता रमणेषु योषितां न हि भावस्खलितान्यपेक्षते"** ॥
(वि. ४।२६)

49. हेम्नः शुद्ध्यशुद्धी परीक्षितुं वह्निरिव काव्यादीनां गुणदोषौ परीक्षितुं सुधिय एव प्रभवन्ति–

**"तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा"** ॥
(रघु. १।१०)

**"उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।**
**श्यामायते न विद्वत्सु यत् काञ्चनमिवाग्निषु"** ॥ (मा. २।९)

50. प्रायो मूढाः परप्रत्ययनेयबुद्धयो दृश्यन्ते –

**"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।**
**सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः"**॥
(मा. १।२)

**"अथवा पण्डितप्रत्ययनेया ननु मूढजातिः"** । (मा. १)

51. यदि पथि पदचिह्नानि पुरस्ताद् अभ्युन्नतानि पश्चाच्च अवगाढानि तदावश्यं कयाचिदङ्गनया तेन पथागतया भवितव्यम् इत्यभ्यूहः कालिदासस्य–

**"अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा"**॥
(अ.शा. २।६)

**"पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री**
**मेघाभिवृष्टसिकतासु वनस्थलीषु ।**
**पश्चान्नता गुरुनितम्बतया ततोऽस्याः**
**दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥"**

(वि. ४।१६)

52. किञ्चिन्मदिरासेवनं सुन्दरीणां रमणीयतां वर्धयति–

**"नयनान्यरुणानि घूर्णयन् वचनानि स्खलयन् पदे पदे ।**
**असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना" ॥**

(कु. स. ४।१२)

**"शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति, अपि सत्य एष लोकवादः"** । (मा. ३)

53. मानसी स्थितिः आगामि सुखं वा दुःखं वा सूचयति–

**"अस्ति खलु लोकप्रवादः आगामि सुखं वा दुःखं वा हृदयसमवस्था कथयतीति"**।

(मा. ५)

**"न सुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् ।**
**अभिमुखीष्विव काङ्क्षितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः" ॥**

(वि. २।९)

54. दिवससमये कार्यान्तरवैयग्र्येण सुसहापि किल विरहव्यथा रात्रौ दुःसह्य भवति–

**"सव्यापारामहनि न तथा पीडयेन्मद्वियोगः ।**
**शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते" ॥**

(वि. २।२४)

**"कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।**
**अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या" ॥**

( वि. ३।४)

55. प्रकृतौ प्रगाढप्रेमाणः केचिद् वृक्षकान्, मृगांश्च पुत्रवत् पोषयन्ति, अन्ये च तेषु भ्रातृष्विव स्निह्यन्ति–

**"यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे**
**हस्तं प्राप्य स्तबकनमितो बालमन्दारवृक्षः" ॥**

(मे. २।१५)

**"यस्य त्वया व्रणविरोपणमिङ्गुदीनां**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**
**श्यामाकमुष्टिपरिवर्धितको जहाति**
**सोऽयं न पुत्रकृतकः पदवीं मृगस्ते" ॥**

(अ. शा. ४/१४)

**"शकुन्तला–अस्ति मे सोदरस्नेहोऽप्येतेषु" ।**

(अ.शा. १)

56. चक्रवाकयोः प्रेम अनुरागातिशयस्य आदर्शतया वर्ण्यते कालिदासेन–

**"निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।**
**परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती" ॥**

(कु. स. ५।२६)

**"शकुन्तला–हला ! पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्ती आतुरा चक्रवाक्यारटति दुष्करमहं करोमीति तर्कयामि" ॥**

(अ. शा. ४)

57. राजैव प्रजानां सर्वाधिको बन्धुः – इत्यभिप्रैति कालिदासः –

**"प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः" ॥**

(रघु. १।२४)

**"नियमयसि विमार्गप्रस्थितानात्तदण्डः**
**प्रशमयसि विवादं कल्पसे रक्षणाय ।**
**अतनुषु विभवेषु ज्ञातयः सन्तु नाम**
**त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्" ॥**

(अ. शा. ५।८)

**"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।**
**स स पापादृते तासां दुष्यन्त इति घुष्यताम्" ॥**

(अ. शा. ६।२३)

58. राज्ञामवदानानि पदेषु (गीतिषु) निबध्य गीयन्ते स्म जनैः –

**"विच्छित्तिशेषैः सुरसुन्दरीणां**
**वर्णैरमी कल्पलतांशुकेषु ।**
**विचिन्त्य गीतक्षममर्थजातं**
**दिवौकसस्त्वच्चरितं लिखन्ति" ॥**

(अ. शा. ७।५)

**"इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।**
**आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः" ॥**

(रघु. ४।२०)

**"विरचितपदं वीरप्रीत्या सुरोपमसूरिभि-**
**श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।**
**तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं**
**परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम्" ॥**

(मा. ५।२)

**"शस्त्रैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान् ।**
**जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥"**

(रघु. ४।७८)

('उदाहरणम्' इति कस्यचिद् गीतिविशेषस्य नाम । )

59. युक्तयोर्द्वयोर्वस्तुनोः (बहूनां वा) संयोगं तत्तदृतुषु लतानां स्व-पुष्पसम्बन्धेन उपमिनोति कालिदासः –

**"राजा– तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लताकुसुमम्" ।**

(अ. शा. ७)

**"यावत् पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।**
**सखीभिर्याति सम्पर्कं लताभिः श्रीरिवार्तवम्" ॥**

(वि. १।१४)

60. नियोज्यानां कार्यसाफल्यं नियोजकप्रभावाधीनं मन्यते कालिदासः –

"ननु वज्रिण एव वीर्यमेतद्विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराविसर्पी प्रतिशब्दो हि हरेर्हिनस्ति नागान्" ॥

(वि. १।१७)

"सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत्" ॥

(अ. शा. ७।४)

शकुन्तलोर्वश्यौ स्वप्रियपुनर्दर्शनेच्छया कण्टकवृक्षशाखादिभिः आत्मनो गतिं भग्नामिव प्रदर्शयतः –

"दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम्" ॥

(अ. शा. ७।१२)

"प्रियमाचरितं लते त्वया गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा परिवृत्तार्धमुखी मया हि दृष्टा" ॥

(वि. १।१८)

62. रविरिव प्रायो राजानोऽपि विश्रान्तिशून्या नित्यं कर्मव्यापृताः –

"आलोकान्तात् प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः ।
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः" ॥

(वि. २।१)

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः" ॥

(अ. शा. ५।४)

63. सुन्दरं देहं भूषणान्यलङ्कुर्वन्ति, सुन्दरश्च देहो भूषणान्यलङ्करोतीति वर्णयति कालिदासः –

**"आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।**
**उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः" ॥**

(वि. २।३)

**"कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य ।**
**अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः" ॥**

(कु. स. १।४२)

64. प्रायो विरहार्ता राजानो लतामण्डपेषु रत्नशिलाफलकेषूपविश्य आत्मानं किल विनोदयन्ति स्म–

**"एष मणिशिलापट्टकसनाथो माधवीमण्डप उपचाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति"**। (अ. शा. ६)

**"एष खलु मणिशिलापट्टकसनाथोऽतिमुक्तलतामण्डपो........भवन्तं प्रतीच्छति"** । (वि. २)

65. विक्रमोर्वशीये उर्वशी, अभिज्ञानशाकुन्तले च सानुमती तिरस्करिणीविद्यया अन्तर्हिते राजवृत्तान्तं ज्ञातुं प्रयतेते । ( विक्रमोर्वशीये द्वितीयाङ्कः, अभिज्ञानशाकुन्तले च षष्ठाङ्कः) ।

66. अभिज्ञानशाकुन्तले वृक्षैरन्तरितो दुष्यन्तः शकुन्तलायाः सख्याश्च संलापं श्रृणोति । मालविकाग्निमित्रे च अग्निमित्रो मालविकावकुलावलिकयोः संलापं वृक्षान्तरितः श्रृणोति ।

67. बहोः कालादनन्तरं लब्धदर्शना शकुन्तला वाष्परुद्धकण्ठी यदा जयशब्दं स्पष्टतया वक्तुं न शशाक तदा दुष्यन्तेनैषा एवमभ्यधायि–

**"वाष्पेण प्रतिरुद्धेऽपि जयशब्दे जितं मया ।**
**यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम्"** ॥ (अ. शा. ७।२३)

विक्रमोर्वशीये उर्वश्या कृतजयशब्देन पुरूरवसापि एतादृशमेव वाक्यमभिहितम्–

**"मया नाम जितं यस्य त्वयायं समुदीर्यते ।**
**जयशब्दः सहस्राक्षादागतः पुरुषान्तरम्"** ॥ (वि. २।१६)

68. कालिदासेनोपनिबद्धा विदूषका न केवलं भोजनप्रियाः, चोरादिसम्बद्धोपमादिष्वपि प्रवीणाः –

**"कर्मगृहीतेनापि कुम्भीलकेन सन्धिच्छेदे शिक्षितास्मीति वक्तव्यम्"।**

(मा. ३)

**"लोप्त्रेण गृहीतस्य कुम्भीलकस्यास्ति वा प्रतिवचनम्"** । (वि. २) २)

69. कुपितानां भार्याणाम् अनुनये राजानः सममेव प्रवर्तन्ते कालिदासरूपकेषु –

**"अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।**
**वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च" ॥**

(मा. ३।२२)

**"अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात् ।**
**सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः" ॥**

(वि. २।२०)

70. नवमेघदर्शनं सुखिनोऽपि जनान् उत्कण्ठितान् करोति–

**"मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" ॥** (मे. १।३)

**एतेन पुनर्निर्वृतानामपि उत्कण्ठाकारिणा मेघोदयेनानर्थाधीनो भविष्यति"।**

(वि. ४)

71. दुर्दैवहताः प्रायो दुःखपरम्परया पीड्यन्त इति वदति कालिदासः–

**"परावृत्तभागधेयानां दुःखं दुःखानुबन्धि, कुतः,**
**अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।**
**नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः" ॥**

(वि. ५।१०)

**"यदुच्यते रन्ध्रोपनिपातिनोऽनर्था इति तदव्यभिचारि वचः । कुतः –**
**मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः ।**
**मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः" ॥**

(अ. शा. ६।८)

72. शब्दैः वर्णयितुमशक्यस्यार्थस्य कैमुतिकन्यायेन सूचनं तत्र तत्र क्रियते कालिदासेन–

**"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः" ॥**

(अ. शा. ४।६)

**"अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।**
**कां निर्वृतिं चेतसि तस्य कुर्याद् यस्यायमङ्गात् कृतिनः प्ररूढः" ॥**

(अ. शा. ७।१९)

**"यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।**
**उत्सङ्गवर्धितानां गुरुषु भवेत् कीदृशः स्नेहः" ॥**

(वि. ५।१०)

73. दुष्यन्तपुरूरवसोः पुत्रौ मयूराभ्यां क्रीडतः, एको मृन्निर्मितेन अन्यश्च यथार्थेन–

**"वत्स अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि" ।**

(अ.शा. ७)

**"यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।**
**तं मे जातकलापं प्रेषय मणिकण्ठकं मयूरम्" ॥**

(वि. ५।१३)

74. उत्तमस्य राज्ञो राज्ये प्रजानां न कोऽपि क्लेशलेशो भवेत् । सूर्ये प्रकाशमाने तमः कथं वा बाधितुं शक्नुयाद् इति वदति कालिदासः –

**"सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।**
**सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा" ॥**

(रघु. ५।१३)

**"कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति" ॥** (अ. शा. ५।१४)

75. सहजं सौन्दर्यम् अलङ्कृतिं नापेक्षत इति सूचयति कालिदासः –

**"तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव ।**
**राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत् पुनरुक्तदोषा" ॥**

(रघु. १४।९)

**"तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः ।**
**भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने सन्निहितेऽपि नार्यः" ॥**

(कु. स. ७।१३)

76. महापुरुषाः शरीरापेक्षया यश एव उत्तमं मन्यन्ते –

**"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।**
**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु" ॥**

(रघु. २।५७)

**"अपि स्वदेहात् किमुतेन्द्रियार्था-**
**यशोधनानां हि यशो गरीयः"** । (रघु. १४।३५)

77. अनुरूपं भर्तारमधिगच्छन्तीं वनितां समुद्रं गच्छन्त्या नद्या उपमिनोति कालिदासः –

**"शशिनमुपगतेयं कौमुदी मेघमुक्तं**
**जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।**
**इति समगुणयोगप्रीतयस्तत्र पौराः**
**श्रवणकटुनृपाणामेकवाक्यं विवव्रुः "** ॥ (रघु. ७।८५)

**"सखि ! दिष्ट्यानुरूपस्तेऽभिनिवेशः, सागरमुज्झित्वा कुत्र वा महानद्यवतरति"** । (अ. शा. ३)

78. **"कुपिताया राज्या अप्रसन्नतैव वरम्; यतः सा मया उपेक्षितुं शक्यते"** इति चिन्तयति पुरूरवाः । अग्निमित्रोऽप्येवमेव चिन्तयति–

**"राजा–किन्तु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये ।"**

(वि.२)

**"मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।**
**एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता"** ॥ (मा.३।२३)

79. तत्तदङ्गस्पन्दनमागामि शुभम् अशुभं वा सूचयति–

**"वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।**
**अयं मां स्पन्दितैर्बाहुराश्वासयति दक्षिणः"** ॥(वि. ३।९)

**"वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद "**॥ (रघु. ६।६८)
**"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य"** ।

(अ. शा. १।१६)

**"शकुन्तला–अहो ! किं मे वामेतरं नयनं विस्फुरति"** । (अ. शा. ५ )

80. उत्तमो राजा धर्मार्थकामानां सममेव प्राधान्यं यच्छति–

**"पितुर्नियोगाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः ।**
**धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम्"** ॥

(रघु. १७।५७)

81. सर्वासु गीत-नृत्य-चित्रलेखनादिषु ललितकलासु आसक्तोऽपि कालिदासो विशेषतश्चित्रकलां पुनः पुनः प्रस्तौति स्त्रीणां सौन्दर्यवर्णनावसरे विरहादिवर्णनेषु च । पार्वत्याः किल रूपं तूलिकया उन्मीलितं चित्रमिव नितरां मनोरममासीत् –

**"उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन"** ॥

(कु. स. १।३२)

शकुन्तला किल ब्रह्मणा प्रथमतः सम्यक् चित्रे निवेश्य ततः कल्पित-प्राणेव नितरां मनोहराकारा आसीत्–

**"चित्रे निवेश्य परिकल्पितसत्त्वयोगा**
**रूपोच्चयेन विधिना मनसा कृता नु ।**
**स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे**
**धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः"** ॥ (अ. शा. २।९)

82. सर्वानपि दोषानपाकृत्य अत्युत्तमं दोषलेशरहितं रूपं निर्मातुं शक्यते चित्रे; परन्तु स्वरूपकनायिकानां सौन्दर्यं चित्रेऽपि पूर्णतया न

प्रदर्शयितुं शक्यत इति वर्णयति कालिदासः –

**"यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।**
**तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम्"** ॥

(अ.शा. ६)

**"चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।**
**संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता"** ॥

(मा. २।२० )

83. कालिदासस्य काव्येषु चित्रविषयका निर्देशा बहव उपलभ्यन्ते । वनवासाद् निवृत्तः किल रामो राज्याभिषेकार्थं विलिखितनैकचित्रासु चित्रशालासु सीतया साकं मनो विनोदयति स्म । तेषु चित्रेषु कानिचित् स्वसम्बद्धानीत्यप्यभ्यूहितुं शक्यते–

**"तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु ।**
**प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन्"** ॥

(रघु. १४।२५)

उत्तररामचरिते चित्रदर्शनदृश्यनिर्माणे भवभूतेरस्मादेव श्लोकात् सूचना लब्धेति प्रतीयते ।

84. स्वरूपकगतानां केषाञ्चित् पात्राणाम् अन्वर्थतां प्रतिपादयति कालिदासः –

**"अतः खलु प्रियंवदासि त्वम्"** । (अ. शा. १)
**"विमर्दसुरभि बकुलावलिका खल्वहम्"** । (मा. ३)
**"मधुकरिके चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति"** ।

(अ. शा. ६)

85. कालिदासीयाः काश्चन नायिका ब्रह्मा लावण्यरूपेण द्रव्येण मनसैव निर्मिमाय विना हस्तस्पर्शम्–

**"चित्रे निवेश्य...."** इत्यादि पूर्वोदाहृतम् । (अ.शा. २।९)
**"वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः"** ॥

(कु. स. १।३५)

86. कालिदासः स्वरूपकेषु कथावस्तुग्रथने अङ्गुलीय-शिरोमण्यादीनां सुरुचिरमुपयोगं करोति । अभिज्ञानशाकुन्तले दुष्यन्तस्याङ्गुलीयकस्य दर्शनेन शकुन्तलायाः सख्यौ अनसूयाप्रियंवदे तं राजानं जानीतः । दुष्यन्तस्य शकुन्तलाप्रत्यभिज्ञानेऽपि अङ्गुलीयकमेव उपकरोति । मालविकाग्निमित्रे धारिण्या अङ्गुलीयकं बन्धनाद् मालविकाया मोचने साधनं भवति । विक्रमोर्वशीये च संगमनीयमणेः साहाय्येन पुरूरवा उर्वशीं पुनर्लभते, निलीनं च सुतं जानाति ।

87. अभिज्ञानशाकुन्तले मालविकाग्निमित्रे च अन्तपालदुर्गाधिपतितया नियुक्तौ राष्ट्रियौ (राज्ञः श्यालकौ) बन्दीकृताः कन्याः परिचारिकात्वेन राजान्तःपुरं प्रेषयतः –

**"आर्य कति दिवसान्यावयोर्मित्रा वसुना राष्ट्रियेण भट्टिनी पादमूलं प्रेषितयोः"** । (अ. शा. ६)

**"अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम.....अन्तपालदुर्गे स्थापितः । तेन.....भगिन्या उपायनं प्रेषिता (मालविका)"** । (मा. १)

88. शकुन्तला दुष्यन्ताय, उर्वशी च पुरूरवसे मदनलेखां लिखतः । विद्याधरसुन्दर्यश्च प्राय एतादृशलेखानां लिखने निपुणा इति वर्णयति कालिदासः –

**"न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम्"** ॥

(कु. स. १।७)

89. शकुन्तला यदा स्वेन लिखितां मदनलेखां पठित्वा सख्यौ श्रावयति तदा हठाद् दुष्यन्त आगच्छति –

**"राजा (सहसोपसृत्य)-**

**"तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।**
**ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः"** ॥

(अ. शा. ३।१५)

एवं दुष्यन्तागमनस्य, मालविकायाः पुरतोऽग्निमित्रगमनस्य च मध्ये साम्यं विद्यते–

**"राजा–(उपेत्य)**

**कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।**

**ननु तव साक्षादयमहमनन्यसाधारणो दासः"** ।। (मा. ४।१०)

९०. वस्तुपुरुषादीनां द्वयं त्रितयं वा निर्दिश्य तत्सम्बद्धानां धर्माणां वस्तुप्रतिवस्तुरूपेण वा बिम्बप्रतिबिम्बभावेन वा वर्णनं कालिदासस्य नित्यमभीप्सितमिव दृश्यते –

**"सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता"** ।। (रघु. १।१९)

**"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी"** ।।

(कु. स. ५।७१)

**"परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।**
**समुद्रवसना चोर्वी सखी च युवयोरियम्"** ।।

(अ.शा. ३।१७)

एवं कालिदासस्य रचनासु पदानाम्, पदसमूहानाम्, वाक्यानाम्, भावानाम्, वर्णनानाम्, कथासन्निवेशादीनां च बह्व्यः पुनः पुनरावृत्तयो दृश्यन्ते येषामनुशीलनेन कवेस्तत्तद्विषयगत आदरातिशयो ज्ञायते । धावतां मृगादीनाम्, महता वेगेन गच्छतां वाहनानाम्, आकाशमार्गाद् दृष्टाया भुवः, ऋष्याश्रमाणां च वर्णनानि, वैतालिकमुन्यादिभिश्च क्रियमाणा राजप्रशंसाः, अन्ये च बहवो विषया अत्र निवेशयितुं शक्यन्त इति दिग्दर्शनमात्रेणैवात्र सन्तुष्यतेऽस्माभिरिति ।

●

